## अथ माध्याह्निकसन्ध्यावन्दने द्वितीयो भागः ।

१. स्थलप्रोक्षणम् भूमिप्रार्थना च – ஸ்தல ப்ரோக்ஷணமும் பூமி ப்ரார்த்தனையும் :

२. प्राणायामः—ப்ராணாயாமம்.

१. ओम् भूर्भुवःस्वः इति स्थलं प्रोक्ष्य—

आसनमन्त्रस्य पृथिव्याः मेरुपृष्ठः ऋषिः । सुतलं (अतलं वा) छन्दः । श्रीकूर्मो देवता । आसने विनियोगः—इति उक्त्वा—

पृथ्वि त्वया धृता लोकाः देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥

इति अञ्जलिं कृत्वा भूमिं प्रार्थ्य तत्र स्थित्वा—

२.(अ) प्राणायाममन्त्राणां ऋषिदेवतादि — ப்ராணாயாம மந்த்ரங்களுக்கு ரிஷிதேவதை முதலியன.

१. प्रणवस्य ऋषिः ब्रह्मा । देवी गायत्री च्छन्दः । परमात्मा देवता ।

२. भूरादि - व्याहृतिसप्तकस्य अत्रि - भृगु - कुत्स - वसिष्ठ - गौतम - काश्यप- अङ्गिरसः ऋषयः । गायत्री - उष्णिग् - अनुष्टुब् - बृहती-पङ्क्ति – त्रिष्टुप्-जगत्यः छन्दांसि । अग्नि-वायु-अर्क-वागीश-वरुण-इन्द्र-विश्वेदेवाः- देवताः

३. सावित्र्याः ऋषिः विश्वामित्रः । देवी गायत्री छन्दः । सविता देवता ।

४. गायत्रीशिरसः ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । परमात्मा देवता- इति न्यस्य, सर्वेषां (मन्त्राणां) प्राणायामे विनियोगः इति उक्त्वा—

२. (आ) व्याहृतीनां अङ्गन्यासः व்யாஹ்ருதிகளுக்கு அங்கந்யாஸம்.

१. ओम् भूः इति पादयोः—
२. ओम् भुवः ,, जङ्घयोः—
३. ओम् स्वः ,, जान्वोः—
४. ओम् महः ,, उदरे—
५. ओम् जनः ,, हृदये—
६. ओम् तपः ,, मुखे—
७. ओम् सत्यम् ,, शिरसि च—

अङ्गुळीभिर्न्यस्य—

(इ) व्याहृतिदेवतामूर्तिध्यानम्:— வ்யாஹ்ருதி தேவதைகளின் மூர்த்தி த்யானம்.

श्वेत- श्याम- पीत- पिशङ्ग- रोहित- नील- कनकवर्णाः;
अभय-अक्षस्रक् अम्भोज-वरहस्ताः सावित्रचतुर्हस्ताः;
स्रक्चन्दनाद्यलङ्कृताः सर्वाभरणभूषिताः सोपवीताः सजटाश्च
सप्त व्याहृति-देवताः ध्यात्वा—

२. (ई) गायत्र्याः अङ्गन्यासः —காயத்ரிமந்த்ரத்திற்கு அங்கந்யாஸம்.

१. ओम् तत्सवितुः- ज्ञानाय हृदयाय नमः,- हृदये ।
२. ओम् वरेण्यं- ऐश्वर्याय शिरसे स्वाहा- शिरसि ।
३. ओम् भर्गो देवस्य- शक्त्यै शिखायै वषट्- शिखायाम् ।
४. ओम् धीमहि- बलाय कवचाय हुम्- कण्ठादि कटचन्तं- शरीरे ।
५. ओम् धियो यो नः - तेजसे नेत्राभ्यां वौषट् - नेत्रयोः ।
६. ओम् प्रचोदयात्- वीर्याय अस्त्राय फट् - करतले सशब्दं आघट्य ।
७. ओम् भूर्भुवस्स्वरोम्- छोटिकया दिग्बन्धनं च कृत्वा—

२. (उ) गायत्रीमूर्तिध्यानम्:—*காயத்ரி மூர்த்தி த்யானம்.*

ध्यानम्-श्लोकः—

मुक्ता - विद्रुम - हेम - नील - धवलच्छायैः मुखैः त्रीक्षणैः
युक्तामिन्दुकलानिबद्धमकुटां तत्त्वार्थवर्णात्मिकाम् ।
गायत्रीं वरदाभयाङ्कुशकशाः शुभ्रं कपालं गुणम् ।
शङ्खं चक्रमथारविन्दयुगळं हस्तैर्वहन्तीं भजे ॥

इति सावित्रीमूर्तिध्यानं कृत्वा—

२. (ऊ) गायत्रीशिरोमन्त्रन्यासः; तद्देवतामूर्तिध्यानं च— *காயத்ரி சிரோமந்த்ரத்தின் ந்யாஸமும் மூர்த்தி த்யானமும்.*

ओमापो ज्योतीरसः अमृतं ब्रह्म भूर्भुवस्स्वरोम्—
इति शिरःप्रभृति पादपर्यन्तम् पाणिभ्यां स्वशरीरं स्पृष्ट्वा—

ध्यानम् - श्लोकः—

अर्कमण्डलमध्यस्थं सूर्यकोटिसमप्रभम् ।
ब्रह्मादिसेव्यपादाब्जं नौमि ब्रह्म रमासखम् ॥

इति शिरोमन्त्रदेवतां—सूर्यमण्डलवर्तिनं भगवन्तं - ध्यात्वा—

प्राणायाममन्त्रः—

ओम् भूः । ओम् भुवः । ओम् स्वः । ओम् महः । ओम् जनः ।
ओम् तपः । ओम् सत्यम् ।
ओम् तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् ॥
ओमापो ज्योतीरसः अमृतं ब्रह्म भूर्भुवस्स्वरोम्—

इति त्रिः सकृच्च (आहृत्य दशवारं) प्राणान् आयम्य अष्टोत्तरशतकृत्वः (अष्टाविंशतिकृत्वः दशकृत्वो वा) गायत्रीजपं करिष्ये - इति सङ्कल्प्य—

## अथ गायत्रीजपः

1. गायत्री-आवाहनम्—*காயத்ரீ ஆவாஹனம்.*

आयातु इत्यनुवाकस्य वामदेवः ऋषिः । अनुष्टुप् छन्दः । गायत्री देवता इति न्यस्य, गायत्री-आवाहने विनियोगः इति उक्त्वा -

आयातु वरदा देवी अक्षरं ब्रह्मसंमितम् ।

गायत्रीं छन्दसां माता इदं ब्रह्म जुषस्व नः ॥

ओजोऽसि । सहोऽसि । बलमसि । भ्राजोऽसि ।

देवानां धाम नामासि । विश्वमसि विश्वायुः

सर्वमसि सर्वायुः । अभिभूरों गायत्रीं आवाहयामि ॥

इति गायत्रीं सूर्यमण्डले स्वहृदये वा आवाह्य—

2. गायत्रीध्यानम् –*காயத்ரீ த்யானம்.*

मध्यं दिने तु गायत्रीं रविमण्डलमध्यगाम् ।

यजुर्वेदं व्याहरन्तीं श्वेतां शूलकरां शुभाम् ।

युवतीं रुद्रदेवत्यां ध्यायामि वृषभवाहनाम् ॥ इतिध्यात्वा––

3. जपमन्त्राणां ऋषिदेवतादि— *மந்த்ரங்களுக்கு ரிஷிதேவதை முதலியன.*

(अ) प्रणवस्य ऋषिर्ब्रह्मा । देवी गायत्रीच्छन्दः । परमात्मा देवता ।

(आ) भूरादि-व्याहृतित्रयस्य अत्रि-भृगु-कुत्साः ऋषयः । गायत्री-उष्णिग्-अनुष्टुभः छन्दांसि । अग्नि-वायु-अर्काः देवताः ।

(इ) सावित्र्या ऋषिः विश्वामित्रः । देवी गायत्री छन्दः । सविता देवता—इति न्यस्य, माध्याह्निकसन्ध्याजपे विनियोगः इति उक्त्वा—करतलयोः ओम् इति प्रणवं न्यस्य—

4. मन्त्राणां करन्यासः—மந்த்ராங்களுக்கு கரந்யாஸம்.

| | | | |
|---|---|---|---|
| ओम् भूः | - | अङ्गुष्ठाभ्यां | नमः । |
| ओम् भुवः | - | तर्जनीभ्यां | नमः । |
| ओम् स्वः | - | मध्यमाभ्यां | नमः । |
| ओम् तत्सवितुर्वरेण्यम् | - | अनामिकाभ्यां | नमः । |
| ओम् भर्गो देवस्य धीमहि | - | कनिष्ठिकाभ्यां | नमः । |
| ओम् धियो यो नः प्रचोदयात्- | | करतलकरपृष्ठाभ्यां | नमः— |

इति न्यस्य, गायत्र्या पाणिभ्यां शिरःप्रभृति पादान्तं व्यापकन्यासं विधाय-

5. मन्त्राणां अङ्गन्यासः—மந்த்ராங்களுக்கு அங்கந்யாஸம்.

| | | | |
|---|---|---|---|
| ओम् भूः | —ज्ञानाय हृदयाय नमः | - | हृदये |
| ओम् भुवः | —ऐश्वर्याय शिरसे स्वाहा | - | शिरसि |
| ओम् स्वः | —शक्त्यै शिखायै वषट् | - | शिखायाम् |

ओम् तत्सवितुर्वरेण्यम् – बलाय कवचाय हुम् इति कण्ठादिकट्यन्तां तनुं पाणिभ्यां स्पृष्ट्वा—

अथवा व्यत्यस्त– पाणिभ्यां भुजौ स्पृष्ट्वा—

ओम् भर्गो देवस्य धीमहि — तेजसे नेत्राभ्यां वौषट् नेत्रयोः

ओम् धियो यो नः प्रचोदयात् - वीर्यायास्त्राय फट् इति करौ आस्फोट्य-भूर्भुवस्स्वरोम् - इति दिग्बन्धः इति छोटिकया दिक्षु बन्धनं च विधाय-

6. गायत्र्यर्थध्यानम्—காயத்ரி மந்த்ரார்த்தத்தை நினைத்தல்.

श्लोकः—

यो देवः सवितास्माकं धियो धर्मादिगोचराः ।
प्रेरयेत तस्य यद्भर्गः तद्वरेण्यमुपास्महे ॥

इति गायत्र्यर्थं ध्यात्वा—

आदित्यमण्डले ध्यायेत परमात्मानमव्ययम् ।
विष्णुं चतुर्भुजं रत्नपङ्कजासनमध्यगम् ॥
किरीट-हार-केयूर-कटकादिविभूषितम् ।
श्रीवत्सवनमालाश्रीतुळसीकौस्तुभोज्ज्वलम् ॥
हरिं पीताम्बरधरं शङ्खचक्रगदाधरम् ।
प्रसन्नवदनं रत्नकुण्डलैर्मण्डिताननम् ॥
सर्वरत्नसमायुक्तं सर्वाभरणभूषितम् ।
एवं ध्यात्वा जपेन्नित्यं मन्त्रमष्टोत्तरं शतम् ॥

इत्युक्तप्रकारेण आदित्यमण्डले भगवन्तं ध्यात्वा—

कनिष्ठिकामूलमारभ्य प्रादक्षिण्येन गणयन् यथासंकल्पं पञ्चावसानं गायत्री-मन्त्रं जपेत् ॥

7. पञ्चावसानप्रकारः जपमन्त्रः—

१. ओम् ।
२. भूर्भुवस्स्वः ।
३. तत्सवितुर्वरेण्यम् ।
४. भर्गो देवस्य धीमहि ।
५. धियो यो नः प्रचोदयात् ॥

इति ॥

## माध्याह्निकसन्ध्यावन्दने तृतीयो भागः
## उपस्थानम्

प्राणान् आयम्य—

.......प्रीत्यर्थं माध्याह्निकसन्ध्योपस्थानमहं करिष्ये इति सङ्कल्प्य—

1. गायत्र्युद्वासनम्—காயத்ரியை யதாஸ்தானம் அனுப்புதல்.

उत्तम इत्यनुवाकस्य वामदेवः ऋषिः। अनुष्टुप् छन्दः। गायत्री देवता। गायत्री- उद्वासने विनियोगः—

उत्तमे शिखरे देवी भूम्यां पर्वतमूर्धनि।
ब्राह्मणेभ्यो ह्यनुज्ञानं गच्छ देवि यथासुखम्॥

इति गायत्रीं उद्वास्य—

2. उपस्थानम्—மந்த்ரங்களைக்கூறிக்கொண்டு தேவதையின் அருகில் பக்தியுடன் நிற்றல்

उदु त्यमिति त्रयोदशर्चस्य सूक्तस्य प्रस्कण्वः ऋषिः। आद्याः नव गायत्र्यः। अन्त्याः चतस्रः अनुष्टुभः। सूर्यो देवता। माध्याह्निकोपस्थाने विनियोगः॥

(अ) उदु त्यं जातवेदसं देवं वहन्ति केतवः।
दृशे विश्वाय सूर्यम्॥ १॥
अपत्ये तायवो यथा नक्षत्रा यन्त्यक्तुभिः।
सूराय विश्वचक्षसे॥ २॥

अदृश्रमस्य केतवो विरश्मयो जनाँ अनु ।
भ्राजन्तो अग्नयो यथा ॥ ३ ॥

तरणिर्विश्वदर्शतो ज्योतिष्कृदसि सूर्य ।
विश्वमा भासि रोचनम् ॥ ४ ॥

प्रत्यङ् देवानां विशः प्रत्यङ्ङुदेषि मानुषान् ।
प्रत्यङ् विश्वं स्वर्दृशे ॥ ५ ॥

येना पावक चक्षसा भुरण्यन्तं जनाँ अनु ।
त्वं वरुण पश्यसि ॥ ६ ॥

वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः ।
पश्यन् जन्मानि सूर्य ॥ ७ ॥

सप्त त्वा हरितो रथे वहन्ति देव सूर्य ।
शोचिष्केशं विचक्षण ॥ ८ ॥

अयुक्त सप्त शुन्ध्युवः सूरो रथस्य नप्त्यः ।
ताभिर्याति स्वयुक्तिभिः ॥ ९ ॥

उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् ।
देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम् ॥ १० ॥

उद्यन्नद्य मित्रमहः आरोहन्नुत्तरां दिवम् ।
हृद्रोगं मम सूर्य हरिमाणं च नाशय ॥ ११ ॥
शुकेषु मे हरिमाणं रोपणाकासु दध्मसि ।
अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥ १२ ॥
उदगादयमादित्यो विश्वेन सहसा सह ।
द्विषन्तं मह्यं रन्धयन् मो अहं द्विषते रधम् । १३ ॥

(आ) चित्रं देवानमिति षडृचस्य सूक्तस्य आङ्गिरसः कुत्सः ऋषिः । त्रिष्टुप् छन्दः । सूर्यो देवता । सूर्योपस्थाने विनियोगः ॥

चित्रं देवानामुदगादनीकं
चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावा पृथिवी अन्तरिक्षं
सूर्य आत्मा जगतस्तस्थुषश्च ॥ १४ ॥
सूर्यो देवीमुषसं रोचमानां
मर्यो न योषामभ्येति पश्चात् ।
यत्रा नरो देवयन्तो युगानि
वितन्वते प्रति भद्राय भद्रम् ॥ १५ ॥

भद्रा अश्वा हरितः सूर्यस्य

चित्राः एतग्वा अनुमाद्यासः ।

नमस्यन्तो दिव आ पृष्ठमस्थुः

परि द्यावापृथिवी यन्ति सद्यः ॥ १६ ॥

तत्सूर्यस्य देवत्वं तन्महित्वं

मध्या कर्तोर्विततं सं जभार ।

यदेदयुक्त हरितः सधस्थाद्

आद्रात्री वासस्तनुते सिमस्मै ॥ १७ ॥

तन्मित्रस्य वरुणस्याभिचक्षे

सूर्यो रूपं कृणुते द्योरुपस्थे ।

अनन्तमन्यद् रुशदस्य पाजः

कृष्णमन्यद् हरितः सं भरन्ति ॥ १८ ॥

अद्या देवा उदिता सूर्यस्य

निरंहसः पिपृता निरवद्यात् ।

तन्नो मित्रो वरुणो मामहन्तां

अदितिः सिन्धुः पृथिवी उत द्यौः ॥ १९ ॥

(इ) सविता पश्चात्तात् सविता पुरस्तात्

सवितोत्तरात्तात् सविताधरात्तात् ।

सविता नः सुवतु सर्वतातिं

सविता नो रासतां दीर्घमायुः ॥ २० ॥ इति ॥

उदु त्यमिति प्रथममन्त्रकथनकाले व्योममुद्रया दक्षिणेन नेत्रेण सूर्यं सकृत् विलोक्य—

(ई) जातवेदसे इत्यस्य कश्यपः ऋषिः । त्रिष्टुप् छन्दः । अग्निः देवता । सन्ध्योपस्थाने विनियोगः—

जातवेदसे सुनवाम सोमम्

अरातीयतः नि दहाति वेदः ।

स नः पर्षदति दुर्गाणि विश्वा

नावेव सिन्धुं दुरितात्यग्निः ॥

(उ) पिशङ्गभृष्टिमित्यस्य परुच्छेपः ऋषिः । गायत्री छन्दः । इन्द्रो देवता । उपस्थाने विनियोगः—

पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण ।

सर्वं रक्षो नि बर्हय ॥

(ऊ) भद्रं कर्णेभिः इत्यस्य गोतमः ऋषिः । त्रिष्टुप् छन्दः । विश्वेदेवा देवताः । उपस्थाने विनियोगः—

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।

स्थिरैरङ्गैः तुष्टुवांसः तनूभिः व्यशेम देवहितं यदायुः ॥

(आ) केशीत्यस्य जूतिः ऋषिः । अनुष्टुप् छन्दः । अग्निर्देवता । उपस्थाने विनियोगः—

केश्यग्निं केशी विषं केशी बिभर्ति रोदसी ।

केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ॥

3. सन्ध्यादिदेवतावन्दनम् ஸந்த்யை முதலான தேவதைகளுக்கு வந்தனம்.

ओम् सन्ध्यायै नमः
,, सावित्र्यै नमः
,, गायत्र्यै नमः
,, सरस्वत्यै नमः
,, सर्वाभ्यो देवताभ्यो नमो नमः

इति प्रणम्य अभिवाद्य-

4. दिग्देवतावन्दनम् திக் தேவதைகளுக்கு வந்தனம்.

ओम् प्राच्यै दिशे नमः
,, दक्षिणायै दिशे नमः
,, प्रतीच्यै दिशे नमः
,, उदीच्यै दिशे नमः

ओम् ऊर्ध्वाय नमः
,, अधराय नमः
,, अन्तरिक्षाय नमः
,, भूम्यै नमः
,, विष्णवे नमः

इति तां तां दिशं प्रति अञ्जलिं कृत्वा—

5. भगवद्वन्दनम्—பகவானுக்கு வந்தனம்.

ध्येयस्सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥
शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥

इति भगवन्तं प्रणम्य अभिवादयेत् ।

सकृत् आचम्य, जलस्थलं प्रोक्ष्य, सात्त्विकत्यागं कुर्यात् ॥

तत्प्रकारः—

भगवानेव स्वशेषभूतेन मया माध्याह्निकसन्ध्यावन्दनाख्यं कर्म स्वस्मै स्वप्रीतये स्वयमेव कारितवान् , इति ।

श्रीवैष्णवानां माध्याह्निकसन्ध्यावन्दनक्रमः समाप्तः ॥

திக்தேவதை வந்தனங்களுக்குப் பிறகு ஸ்மார்த்தர்கள் உபஸ்தானத்தில் சொல்லும் சுலோகங்கள் அடுத்துத் தரப்படுகின்றன. இவை மூன்று காலங்களுக்கும் பொதுவானவை.

ब्रह्मणे नमः । यमाय नमः ।

१. यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥

२. औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
चित्रगुप्ताय वै नमो नम इति ।

३. ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः ॥
विश्वरूपाय वै नमो नम इति ।

४. नर्मदायै नमः प्रातः नर्मदायै नमो निशि ।
नमोऽस्तु नर्मदे तुभ्यं पाहि मां विषसर्पतः ॥

५. अपसर्प सर्प भद्रं ते दूरं गच्छ महायशः ।
जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मरन् ॥

६. जरत्कारोर्जरत्कार्वां समुत्पन्नो महायशाः ।
आस्तीकः सत्यसन्धो मां पन्नगेभ्योऽभिरक्षतु ॥

७. नमस्सवित्रे जगदेकचक्षुषे जगत्प्रसूति-स्थिति-नाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चनारायणशङ्करात्मने ॥

८. ध्येयस्सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

९. शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ।

१०. आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥
केशवं प्रति गच्छत्यों नम इति ।

अभिवादये—भोः ।

११. कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि ॥

सन्ध्याजपाख्यं कर्म ओम् तत् सत् ।
जपस्थलं प्रोक्ष्य तन्मृदं हृदि धारयेत् ॥

स्मार्तमाध्याह्निकसन्ध्यावन्दनक्रमश्च समाप्तः ॥

குறிப்பு: ஸவிதா பச்சாத்தாத் என்பதை ஸ்மார்த்தர்கள் சொல்லுகிறார்கள். ஸ்ரீவைஷ்ணவர்களும் சொல்லலாம்.

உதுத்யம் என்ற ரிக்கைச் சொல்லும்போது விரல்களால் வ்யோம முத்திரை செய்து சூரியனைப் பார்க்க வேண்டும். முத்திரை செய்யும் வகையைப் பெரியோர்களிடம் கேட்டுத் தெரிந்து கொள்ள வேண்டும்.

ஸந்த்யா வந்தனம் முன்னுரையில் (பக்கம்–7 வரி–28.) தரப்பட்ட தச்சக்ஷு: என்ற ரிக் முழுவதும் கீழே தரப்படுகிறது.

तच्चक्षुर्देवहितं शुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतम् ॥



# ரிக்வேதிகளின்
# ஸாயம் ஸந்த்யாவந்தனம்

காலை ஸந்த்யா வந்தனத்தில் உள்ள மந்த்ரங்களே சிற்சில மாறுபாடுகளுடன் ஸாயம் ஸந்த்யா வந்தனத்தில் உபயோகிக்கப் படுகின்றன. மாறுதல்கள் மாத்திரமே கீழே குறிக்கப்படுகின்றன.

முதற்பகுதி:— ஸாயம்ஸந்த்யாம் உபாஸிஷ்யே என்பதாக ஸங்கல்பம். ஸூர்ய: ச என்பதற்குப் பதிலாக, அக்னி: ச என்று தொடங்கும் மந்திரம் சொல்லி தீர்த்த ப்ராசனம். பிராயச்சித்த அர்க்யப்ரதானத்திற்கு ந தஸ்ய எனத் தொடங்கும் வேறுமந்திரம் உள்ளது. மற்றவை பொது.

இரண்டாம் பகுதி:—ப்ராதர் த்யாயாமி என்பதற்குப் பதிலாக ஸாயம் ஸரஸ்வதீம் என்று தொடங்கும் சுலோகங்களைச்சொல்லி காயத்ரி தேவதை மூர்த்தி த்யானம். ஸாயம் ஸந்த்யா-உபஸ்தானம் கரிஷ்யே என்பதாக உபஸ்தான ஸங்கல்பம்.

மூன்றும் பகுதி:— மித்ரஸ்ய என்று தொடங்கும் மூன்று ரிக்குகளுக்குப் பதிலாக இமம் மே, தத் த்வா யாமி, யச்சித்தி தே, யத் கிஞ்சேதம், கிதவாஸ: என ஐந்து ரிக்குகள் சொல்லப்பட வேண்டும். ஜாதவேதஸே என்று தொடங்கும் நான்கு ரிக்குகளும் அவைகளுக்கு அடுத்து வருபவைகளும் பொதுவானவை.

## अथ सायंसन्ध्यानुष्ठानक्रमः । प्रथमो भागः ।

सुप्रक्षालितपाणिपादः द्विराचम्य -

1. आचमनमन्त्रः—ஆசமன மந்த்ரம்.

ओम् अच्युताय नमः । अनन्ताय नमः । गोविन्दाय नमः- इति अपः प्राश्य,

ओम् केशवाय नमः । नारायणाय नमः । माधवाय नमः । गोविन्दाय नमः । विष्णवे नमः । मधुसूदनाय नमः । त्रिविक्रमाय नमः । वामनाय नमः । श्रीधराय नमः । हृषीकेशाय नमः । पद्मनाभाय नमः । दामोदराय नमः ।

इति अंगुलीभिः तत्तदंगं स्पृष्ट्वा—

प्राणान् आयम्य—

2. प्राणायाममन्त्रः—ப்ராணாயாம மந்த்ரம்.

ओम् भूः। ओम् भुवः। ओम् स्वः। ओम् महः। ओम् जनः।
ओम् तपः। ओम् सत्यम्।

ओम् - तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।

धियो यो नः प्रचोदयात्॥

ओमापो ज्योतीरसः अमृतं ब्रह्म भूर्भुवस्स्वरोम्॥

इति त्रिः उक्त्वा प्राणायामान्ते दक्षिणकर्णं स्पृष्ट्वा—

....प्रीत्यर्थं सायंसन्ध्यामुपासिष्ये इति सङ्कल्प्य सात्त्विकत्यागं च कृत्वा—

3. प्रोक्षणम्, तन्मन्त्राश्च—ப்ரோக்ஷணமும் அதன் மந்த்ரங்களும்.

आपो हि ष्ठेति तृचस्य सिन्धुद्वीपः ऋषिः। गायत्री छन्दः। आपो देवता इति अङ्गुलीभिः शिरो-जिह्वा-हृदयेषु निधाय, अपां प्रोक्षणे विनियोगः इत्युक्त्वा—

१. ओम्
२. भूर्भुवस्स्वः।
३. तत्सवितुर्वरेण्यम् भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात्॥

१. ओम् आपो हि ष्ठा मयो भुवः।

ओम् ता न ऊर्जे दधातन।

ओम् महे रणाय चक्षसे ॥

२. ओम् यो वः शिवतमो रसः।

ओम् तस्य भाजयतेह नः ।

ओम् उशतीरिव मातरः ॥

३. ओम् तस्मा अरं गमाम वः ।

ओम् यस्य क्षयाय जिन्वथ ।

ओम् आपो जनयथा च नः ॥

इति प्रतिमन्त्रं शिरसि प्रोक्ष्य—

ओम् भूर्भुवः स्वः ॥

इति आत्मानं परिषिच्य—

4. अपां प्राशनम् - पुनः प्रोक्षणम् — *தீர்த்த ப்ராசனம்-மறுபடியும் ப்ரோக்ஷித்துக் கொள்ளுதல்.*

अग्निश्च इत्यनुवाकस्य सूर्यः ऋषिः। गायत्री छन्दः। अग्निः देवता अपां प्राशने विनियोगः—

ओम्—

अग्निश्च मा मन्युश्च मन्युपतयश्च मन्युकृतेभ्यः ।

पापेभ्यो रक्षन्ताम् यदह्ना पापमकार्षम् ।

मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना ।

अहस्तदवलुम्पतु यत्किञ्च दुरितं मयि ।

इदमहं मामृतयोनौ सत्ये ज्योतिषि जुहोमि स्वाहा ।।

इति अपः प्राश्य, सकृत् आचम्य—

दधिक्राव्णः इत्यस्य मन्त्रस्य वामदेवः ऋषिः । अनुष्टुप् छन्दः । दधिक्रावा देवता, इति पूर्ववत् न्यस्य—

ओम् दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।

,, सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत् ।।

,, आपो हि ष्ठा मयो भुवः ।

,, ता न ऊर्जे दधातन ।

,, महे रणाय चक्षसे ।।

,, यो वः शिवतमो रसः ।

,, तस्य भाजयतेह नः ।

,, उशतीरिव मातरः ।।

,, तस्मा अरं गमाम वः ।

,, यस्य क्षयाय जिन्वथ ।

,, आपो जनयथा च नः ।।

इति शिरसि प्रोक्ष्य —

ओम् भूर्भुवः स्वः ।

इति आत्मानं परिषिच्य —

5. अर्घ्यप्रदानम्- नवग्रहकेशवादितर्पणम् —
அர்க்யமளித்தலும் நவக்ரஹ கேசவாதிதர்ப்பணமும்.

प्राणान् आयम्य—

(अ)........प्रीत्यर्थं सायंसन्ध्यायां अर्घ्यप्रदानं करिष्ये इति संकल्प्य—
अर्घ्यप्रदानमन्त्रस्य विश्वामित्रः ऋषिः । गायत्री छन्दः । सविता देवता ।

अर्घ्यप्रदाने विनियोगः—

ओम् भूर्भुवःस्वः ।

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।

धियो यो नः प्रचोदयात् ॥

इति अर्घ्यं त्रिवारं समन्त्रकं दद्यात् ॥

(आ) कालात्यये तु प्रायश्चित्ताघ्यंदानम्-
காலம் கடந்ததற்கான பிராயச்சித்த அர்க்யதானம்.

प्राणान् आयम्य—

....प्रीत्यर्थं सायंसन्ध्याकालातीतप्रायश्चित्तार्थं अर्घ्यप्रदानं करिष्ये इति संकल्प्य—

प्रायश्चित्तार्घ्यप्रदानमन्त्रस्य न तस्य इत्यस्य विश्वमनाः ऋषिः । उष्णिक् छन्दः । अग्निः देवता । प्रायश्चित्तार्घ्यप्रदाने विनियोगः—

न तस्य मायया चन रिपुरीशीत मर्त्यः ।

यो अग्नये ददाश हव्यदातिभिः ॥

इति एकं अर्घ्यं दत्वा—

**ओम् भूर्भुवःस्वः** इति आत्मानं परिषिच्य, प्रदक्षिणं परिक्रम्य—

**असावादित्यो ब्रह्म** इति वदन् सूर्यं पश्येत् ; अथवा ध्यायेत् ।

**आचम्य**—

(इ) नवग्रहतर्पणम्—

१. आदित्यं तर्पयामि ।
२. सोमं तर्पयामि ।
३. अङ्गारकं तर्पयामि ।
४. बुधं तर्पयामि ।
५. बृहस्पतिं तर्पयामि ।
६. शुक्रं तर्पयामि ।
७. शनैश्चरं तर्पयामि ।
८. राहुं तर्पयामि ।
९. केतुं तर्पयामि ।

(ई) केशवादितर्पणम्—

१. केशवं तर्पयामि ।
२. नारायणं तर्पयामि ।
३. माधवं तर्पयामि ।
४. गोविन्दं तर्पयामि ।
५. विष्णुं तर्पयामि ।
६. मधुसूदनं तर्पयामि ।
७. त्रिविक्रमं तर्पयामि ।
८. वामनं तर्पयामि ।
९. श्रीधरं तर्पयामि ।
१०. हृषीकेशं तर्पयामि ।
११. पद्मनाभं तर्पयामि ।
१२. दामोदरं तर्पयामि ।

इति जलेन नव, द्वादश च तर्पणानि कृत्वा सकृत् आचामेत् ॥

## अथ सायंसन्ध्यावन्दने द्वितीयो भागः ।

१. स्थलप्रोक्षणम् भूमिप्रार्थना च—ஸ்தல ப்ரோக்ஷணமும் பூமி ப்ரார்த்தனையும் :

२. प्राणायामः—ப்ராணாயாமம்.

१. ओम् भूर्भुवःस्वः इति स्थलं प्रोक्ष्य—

आसनमन्त्रस्य पृथिव्याः मेरुपृष्ठः ऋषिः । सुतलं (अतलं वा) छन्दः । श्रीकूर्मो देवता । आसने विनियोगः—इति उक्त्वा—

**पृथ्वि त्वया धृता लोकाः देवि त्वं विष्णुना धृता ।**
**त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥**

इति अञ्जलिं कृत्वा भूमिं प्रार्थ्य तत्र स्थित्वा—

२.(अ) प्राणायाममन्त्राणां ऋषिदेवतादि — ப்ராணாயாம மந்த்ரங்களுக்கு ரிஷி தேவதை முதலியன.

१. **प्रणवस्य** ऋषिः ब्रह्मा । देवी गायत्री च्छन्दः । परमात्मा देवता -

२. **भूरादि** - व्याहृतिसप्तकस्य अत्रि - भृगु - कुत्स - वसिष्ठ - गौतम-काश्यप- अङ्गिरसः ऋषयः । गायत्री - उष्णिग् - अनुष्टुब्- बृहती-पङ्क्ति — त्रिष्टुप्-जगत्यः छन्दांसि । अग्नि-वायु-अर्क-वागीश-वरुण-इन्द्र-विश्वेदेवाः देवताः ।

३. **सावित्र्याः** ऋषिः विश्वामित्रः । देवी गायत्री छन्दः । सविता देवता ।

४. **गायत्रीशिरसः** ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । परमात्मा देवता- इति न्यस्य, सर्वेषां (मन्त्राणां) प्राणायामे विनियोगः इति उक्त्वा—

२. (आ)व्याहृतीनां अङ्गन्यासः:வ்யாஹ்ருதிகளுக்கு அங்கந்யாஸம்.

| | | |
|---|---|---|
| १. ओम् भूः | इति | पादयोः— |
| २. ओम् भुवः | ,, | जङ्घयोः— |
| ३. ओम् स्वः | ,, | जान्वोः— |
| ४. ओम् महः | ,, | उदरे— |
| ५. ओम् जनः | ,, | हृदये— |
| ६. ओम् तपः | ,, | मुखे— |
| ७. ओम् सत्यम् | ,, | शिरसि च— |

अङ्गुळीभिर्न्यस्य—

(इ) व्याहृतिदेवतामूर्तिध्यानम् — வ்யாஹ்ருதி தேவதைகளின் மூர்த்தி த்யானம்.

श्वेत- श्याम- पीत- पिशङ्ग- रोहित- नील- कनकवर्णाः;
अभय-अक्षस्रक् अप्पाल-वरहस्ताः सपवित्रचतुर्हस्ताः;
स्रक्चन्दनाद्यलङ्कृताः सर्वाभरणभूषिताः सोपवीताः सजटाश्च
सप्त व्याहृति-देवताः ध्यात्वा—

२. (ई) गायत्र्याःअङ्गन्यासः —காயத்ரிமந்த்ரத்திற்கு அங்கந்யாஸம்.

१. ओम् तत्सवितुः- ज्ञानाय हृदयाय नमः,- हृदये ।
२. ओम् वरेण्यं- ऐश्वर्याय शिरसे स्वाहा- शिरसि ।
३. ओम् भर्गो देवस्य- शक्त्यै शिखायै वषट्- शिखायाम् ।
४. ओम् धीमहि- बलाय कवचाय हुम्- कण्ठादि कटचन्तं- शरीरे ।
५. ओम् धियो यो नः - तेजसे नेत्राभ्यां वौषट् - नेत्रयोः ।
६. ओम् प्रचोदयात्- वीर्याय अस्त्राय फट् - करतले सशब्दं आघट्य ।
७. ओम् भूर्भुवस्स्वरोम्- छोटिकया दिग्बन्धनं च कृत्वा—

२. (उ) गायत्रीमूर्तिध्यानम्—*காயத்ரீ மூர்த்தி த்யானம்.*

ध्यानम्-श्लोकः—

मुक्ता - विद्रुम - हेम - नील - धवलच्छायैः मुखैः त्रीक्षणैः
युक्तामिन्दुकला-निबद्धमकुटां तत्त्वार्थ-वर्णात्मिकाम्।
गायत्रीं वरदाभयाङ्कुश-कशाः शुभ्रं कपालं गुणम्।
शङ्खं चक्रमथारविन्दयुगळं हस्तैर्वहन्तीं भजे॥

इति सावित्रीमूर्तिध्यानं कृत्वा—

२. (ऊ) गायत्रीशिरोमन्त्रन्यासः; तद्देवतामूर्तिध्यानं च— *காயத்ரீ சிரோமந்த்ரத்தின் ந்யாஸமும் மூர்த்தி த்யானமும்*

ओमापो ज्योतीरसः अमृतं ब्रह्म भूर्भुवस्स्वरोम्–

इति शिरःप्रभृति पादपर्यन्तम् पाणिभ्यां स्वशरीरं स्पृष्ट्वा—

ध्यानम् - श्लोकः–

अर्कमण्डलमध्यस्थं सूर्यकोटिसमप्रभम्।
ब्रह्मादिसेव्यपादाब्जं नौमि ब्रह्म रमासखम्॥

इति शिरोमन्त्रदेवतां—सूर्यमण्डलवर्तिनं भगवन्तं - ध्यात्वा—

प्राणायाममन्त्रः—

ओम् भूः। ओम् भुवः। ओम् स्वः। ओम् महः। ओम् जनः।
ओम् तपः। ओम् सत्यम्।

ओम् तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि।
धियो यो नः प्रचोदयात्॥

ओमापो ज्योतीरसः अमृतं ब्रह्म भूर्भुवस्स्वरोम्—

इति त्रिः सकृच्च (आहृत्य दशवारं) प्राणान् आयम्य, अष्टोत्तरशतकृत्वः (अष्टाविंशतिकृत्वः दशकृत्वो वा) **गायत्रीजपं करिष्ये** - इति सङ्कल्प्य—

## अथ गायत्रीजपः

1. गायत्री-आवाहनम् –*காயத்ரி ஆவாஹனம்.*

**आयातु** इत्यनुवाकस्य वामदेवः ऋषिः । अनुष्टुप् छन्दः । गायत्री देवता इति न्यस्य, गायत्री-आवाहने विनियोगः इति उक्त्वा -

**आयातु वरदा देवी अक्षरं ब्रह्मसंमितम् ।**

**गायत्रीं छन्दसां माता इदं ब्रह्म जुषस्व नः ॥**

**ओजोऽसि । सहोऽसि । बलमसि । भ्राजोऽसि ।**

**देवानां धाम नामासि । विश्वमसि विश्वायुः**

**सर्वमसि सर्वायुः । अभिभूरों गायत्रीं आवाहयामि ॥**

इति गायत्रीं सूर्यमण्डले स्वहृदये वा आवाहय—

2. गायत्रीध्यानम्—*காயத்ரி த்யானம்.*

सायं सरस्वतीं श्यामां रविमण्डलमध्यगाम् ।

सामवेदं व्याहरन्तीं चक्रायुधधरां शुभाम् ।

ध्यायामि विष्णुदेवत्यां वृद्धां गरुडवाहनाम् ॥ इतिध्यात्वा——

3. जपमन्त्राणां ऋषिदेवतादि— *மந்த்ரங்களுக்கு ரிஷிதேவதை முதலியன.*

(अ) प्रणवस्य ऋषिर्ब्रह्मा । देवी गायत्रीच्छन्दः । परमात्मा देवता ।

(आ) भूरादि-व्याहृतित्रयस्य अत्रि-भृगु-कुत्साः ऋषयः । गायत्री उष्णिग् अनुष्टुभः छन्दांसि । अग्नि-वायु-अर्काः देवताः ।

(ॐ [illegible]त्र्या ऋषिः विश्वामित्रः । देवी गायत्री छन्दः । सविता देवता—इति न्यस्य, सायंसन्ध्याजपे विनियोगः इति उक्त्वा—

करतलयोः ओम् इति प्रणवं न्यस्य—

4. मन्त्राणां करन्यासः—மந்த்ரங்களுக்கு கரந்யாஸம்.

| | | |
|---|---|---|
| ओम् भूः | - अङ्गुष्ठाभ्यां | नमः । |
| ओम् भुवः | - तर्जनीभ्यां | नमः । |
| ओम् स्वः | - मध्यमाभ्यां | नमः । |
| ओम् तत्सवितुर्वरेण्यम् | - अनामिकाभ्यां | नमः । |
| ओम् भर्गो देवस्य धीमहि | - कनिष्ठिकाभ्यां | नमः । |
| ओम् धियो यो नः प्रचोदयात्- | करतलकरपृष्ठाभ्यां | नमः— |

इति न्यस्य, गायत्र्या पाणिभ्यां शिरःप्रभृति पादान्तं व्यापकन्यासं विधाय-

5. मन्त्राणां अङ्गन्यासः—மந்த்ரங்களுக்கு அங்கந்யாஸம்.

| | | |
|---|---|---|
| ओम् भूः | —ज्ञानाय हृदयाय नमः | - हृदये |
| ओम् भुवः | —ऐश्वर्याय शिरसे स्वाहा | - शिरसि |
| ओम् स्वः | —शक्त्यै शिखायै वषट् | - शिखायाम् |

ओम् तत्सवितुर्वरेण्यम् – बलाय कवचाय हुम् इति कण्ठादिकट्यन्तां तनुं पाणिभ्यां स्पृष्ट्वा—

अथवा व्यत्यस्त–पाणिभ्यां भुजौ स्पृष्ट्वा—

ओम् भर्गो देवस्य धीमहि — तेजसे नेत्राभ्यां वौषट् नेत्रयोः

ओम् धियो यो नः प्रचोदयात् - वीर्यायास्त्राय फट् इति करौ आस्फोट्य-

भूर्भुवस्स्वरोम् - इति दिग्बन्धः इति छोटिकया दिक्षु बन्धनं च विधाय–

6. गायत्र्यर्थध्यानम्—காயத்ரி மந்த்ரார்த்தத்தை [illegible] னத்தல்.

श्लोकः—

योे देव: सवितास्माकं धियो धर्मादिगोचराः ।
प्रेरयेत् तस्य यद्भर्गः तद्वरेण्यमुपास्महे ॥

इति गायत्र्यर्थं ध्यात्वा—

आदित्यमण्डले ध्यायेत् परमात्मानमव्ययम् ।
विष्णुं चतुर्भुजं रत्नपङ्कजासनमध्यगम् ॥
किरीट-हार-केयूर-कटकादिविभूषितम् ।
श्रीवत्सवनमालाश्रीतुळसीकौस्तुभोज्ज्वलम् ॥
हरिं पीताम्बरधरं शङ्खचक्रगदाधरम् ।
प्रसन्नवदनं रत्नकुण्डलैर्मण्डिताननम् ॥
सर्वरत्नसमायुक्तं सर्वाभरणभूषितम् ।
एवं ध्यात्वा जपेन्नित्यं मन्त्रमष्टोत्तरं शतम् ॥

इत्युक्तप्रकारेण आदित्यमण्डले भगवन्तं ध्यात्वा——

कनिष्ठिकामूलमारभ्य प्रादक्षिण्येन गणयन् यथासंकल्पं पञ्चावसानं गायत्री-मन्त्रं जपेत् ॥

7. पञ्चावसानप्रकार: जपमन्त्रः—

१. ओम् ।
२. भूर्भुवस्स्वः ।
३. तत्सवितुर्वरेण्यम् ।
४. भर्गो देवस्य धीमहि ।
५. धियो यो नः प्रचोदयात् ॥

इति ॥

## सायंसन्ध्यावन्दने तृतीयो भागः
## उपस्थानम्

प्राणान् आयम्य—

......प्रीत्यर्थं सायंसन्ध्योपस्थानमहं करिष्ये इति सङ्कल्प्य—

1. गायत्र्युद्वासनम्—காயத்ரியை யதாஸ்தானம் அனுப்புதல்.

उत्तम इत्यनुवाकस्य वामदेवः ऋषिः । अनुष्टुप् छन्दः । गायत्री देवता । गायत्री- उद्वासने विनियोगः—

उत्तमे शिखरे देवी भूम्यां पर्वतमूर्धनि ।
ब्राह्मणेभ्यो ह्यनुज्ञानं गच्छ देवि यथासुखम् ॥

इति गायत्रीं उद्वास्य—

2. उपस्थानम्—மந்த்ரங்களைக் கூறிக்கொண்டுதேவதையின் அருகில் பக்தியுடன் நிற்றல்.

इमं मे, तत्त्वा, यच्चिद्धि, यत्किञ्च, कितवासः इति मन्त्राणां शुनश्शेप - वसिष्ठ - अत्रयः ऋषयः । गायत्री - त्रिष्टुब् - गायत्री - त्रिष्टुभः छन्दांसि । वरुणः, सूर्यो वा देवता । सायंसन्ध्योपस्थाने विनियोगः ॥

(अ) १. इमं मे वरुण श्रुधी हवमद्या च मृळय ।
त्वामवस्युरा चके ॥

२. तत् त्वा यामि ब्रह्मणा वन्दमानः
तदा शास्ते यजमानो हविर्भिः ।

अहेळमानो वरुणेह बोधि

उरुशंस मा नः आयुः प्रमोषीः ॥

३. यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम् ।

मिनीमसि द्यविद्यवि ॥

४. यत्किं चेदं वरुण दैव्ये जने

ऽभिद्रोहं मनुष्या३श्चरामसि ।

अचित्ती यत् तव धर्मा युयोपिम

मा नस्तस्मादेनसो देव रीरिषः ॥

५. कितवासो यद् रिरिपुर्न दीवि

यद् वा घा सत्यमुत यन्न विद्म ।

सर्वा ता वि ष्य शिथिरेव देवाः

अधा ते स्याम वरुण प्रियासः ॥

(आ) जातवेदसे इत्यस्य कश्यपः ऋषिः । त्रिष्टुप् छन्दः । अग्निः देवता । सन्ध्योपस्थाने विनियोगः—

१. जातवेदसे सुनवाम सोमम्

अरातीयतः नि दहाति वेदः ।

स नः पर्षदति दुर्गाणि विश्वा
नावेव सिन्धुं दुरितात्यग्निः ॥

२. पिशङ्गभृष्टिमित्यस्य परुच्छेपः ऋषिः । गायत्री छन्दः । इन्द्रो देवता । उपस्थाने विनियोगः–

पिशङ्गभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण ।
सर्वं रक्षो नि बर्हय ॥

३. भद्रं कर्णेभिः इत्यस्य गोतमः ऋषिः । त्रिष्टुप् छन्दः । विश्वेदेवा देवताः । उपस्थाने विनियोगः–

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैः तुष्टुवांसः तनूभिः व्यशेम देवहितं यदायुः ॥

४. केशीत्यस्य जूतिः ऋषिः । अनुष्टुप् छन्दः । अग्निर्देवता । उपस्थाने विनियोगः–

केश्यग्निं केशी विषं केशी बिभर्ति रोदसी ।
केशी विश्वं स्वर्दृशे केशीदं ज्योतिरुच्यते ॥

3. सन्ध्यादिदेवतावन्दनम् - ஸந்த்யை முதலான தேவதைகளுக்கு வந்தனம்.

ओम् सन्ध्यायै नमः
„ सावित्र्यै नमः

,, गायत्र्यै नमः
,, सरस्वत्यै नमः
,, सर्वाभ्यो देवताभ्यो नमो नमः

इति प्रणम्य अभिवाद्य-

4. दिग्देवतावन्दनम् - திக் தேவதைகளுக்கு வந்தனம்.

ओम् प्राच्यै दिशे नमः
,, दक्षिणायै दिशे नमः
,, प्रतीच्यै दिशे नमः
,, उदीच्यै दिशे नमः
,, ऊर्ध्वाय नमः
,, अधराय नमः
,, अन्तरिक्षाय नमः
,, भूम्यै नमः
,, विष्णवे नमः

इति तां तां दिशं प्रति अञ्जलिं कृत्वा—

5. भगवद्वन्दनम्—பகவானுக்கு வந்தனம்.

ध्येयस्सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥
शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥

इति भगवन्तं प्रणम्य अभिवादयेत् ।

सकृत् आचम्य, जलस्थलं प्रोक्ष्य, सात्त्विकत्यागं कुर्यात् ॥

तत्प्रकारः—

भगवानेव स्वशेषभूतेन मया सायंसन्ध्यावन्दनाख्यं कर्म स्वस्मै स्वप्रीतये स्वयमेव कारितवान् , इति ।

## श्रीवैष्णवानां सायंसन्ध्यावन्दनक्रमः समाप्तः ॥

திக்தேவதை வந்தனங்களுக்குப் பிறகு ஸ்மார்த்தர்கள் உபஸ்தானத்தில் சொல்லும் சுலோகங்கள் அடுத்துத் தரப்படுகின்றன.

ब्रह्मणे नमः । यमाय नमः ।

१. यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥

२. औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
चित्रगुप्ताय वै नमो नम इति ।

३. ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् ।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः ॥
विश्वरूपाय वै नमो नम इति ।

४. नर्मदायै नमः प्रातः नर्मदायै नमो निशि ।
नमोऽस्तु नर्मदे तुभ्यं पाहि मां विषसर्पतः ॥

५. अपसर्प सर्प भद्रं ते दूरं गच्छ महायशः ।
जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मरन् ॥

६. जरत्कारोर्जरत्कार्वां समुत्पन्नो महायशाः ।
आस्तीकः सत्यसन्धो मां पन्नगेभ्योऽभिरक्षतु ॥

७. नमस्सवित्रे जगदेकचक्षुषे जगत्प्रसूति-स्थिति-नाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चनारायणशङ्करात्मने ॥

८. ध्येयस्सदा सवितृमण्डलमध्यवर्ती
नारायणः सरसिजासनसन्निविष्टः ।
केयूरवान् मकरकुण्डलवान् किरीटी
हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥

९. शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥

१०. आकाशात्पतितं तोयं यथा गच्छति सागरम् ।
सर्वदेवनमस्कारः केशवं प्रति गच्छति ॥
केशवं प्रति गच्छत्यों नम इति ।

अभिवादये—भोः ।

११. कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोमि यद्यत् सकलं परस्मै नारायणायेति समर्पयामि ॥

सन्ध्याजपाख्यं कर्म ओम् तत् सत् ।
जपस्थलं प्रोक्ष्य तन्मृदं हृदि धारयेत् ॥

स्मार्तसन्ध्यावन्दनक्रमश्च समाप्तः ॥



## ५. समिदाधानक्रमः

स्नात्वा, सन्ध्यामुपास्य, पादौ प्रक्षाल्य, द्विराचम्य, प्राणानायम्य-........प्रीत्यर्थं, 'प्रातस्समिदाधानमहं करिष्ये' इति प्रातः, 'सायं समिदाधानमहं करिष्ये' इति सायं च सङ्कल्प्य, सात्त्विकत्यागं कृत्वा—

शुद्धं स्थण्डिलमवेक्ष्य, तत्र 'ओं भूर्भुवःस्वः' इति लौकिकाग्निं प्रतिष्ठाप्य, अथ सोदकेन पाणिना त्रिः तूष्णीं परिसमूह्य, ओं भूर्भुवस्स्वः इति त्रिः जलेन परिषिच्य—

२. एकां समिधमादाय—

अग्नये समिधम् इत्यस्य वामदेवः ऋषिः । अनुष्टुप् छन्दः । अग्निर्देवता । समिदाधाने विनियोगः ।

अग्नये समिधमाहार्षं बृहते जातवेदसे ।
तया त्वमग्ने वर्धस्व समिधा ब्रह्मणा वयं स्वाहा ॥

इति समिधमग्नौ निधाय, अग्नये जातवेदसे इदं इत्युक्त्वा पाणी प्रक्षाल्य-अग्नौ प्रताप्य—

३. तेजसा मा समनज्मि इति मुखं अवाक् त्रिः निर्मार्ष्टि (संमृजति) ओं भूर्भुवः स्वः इति त्रिः परिषिच्य स्वाहा ।

४. ओं अग्न्युपस्थानं करिष्ये—

मयि मेधामिति षण्णां मन्त्राणां हिरण्यगर्भः (वामदेवो वा) ऋषिः । गायत्री छन्दः । पूर्वेषां त्रयाणां अग्नि- इन्द्र - सूर्याः देवताः । उत्तरत्रयाणां अग्निर्देवता । अग्न्युपस्थाने विनियोगः ।

मयि मेधां मयि प्रजां मय्यग्निः तेजो दधातु ॥ १ ॥
मयि मेधां मयि प्रजां मयीन्द्रः इन्द्रियं दधातु ॥ २ ॥
मयि मेधां मयि प्रजां मयि सूर्यः भ्राजो दधातु ॥ ३ ॥
यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् ॥ ४ ॥
यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् ॥ ५ ॥
यत्ते अग्ने हरस्तेनाहं हरस्वी भूयासम् ॥ ६ ॥
ओं च मे । स्वरश्च मे । यज्ञोप चे ते । नमश्च ।
यत्ते न्यूनं तस्म ते उप । यत्तेऽतिरिक्तं तस्मै ते नमः ॥

इति उपस्थाय, प्रणम्य, अभिवाद्य, आचम्य, सात्त्विकत्यागं कुर्यात् ॥

५. अथ भसितधारणम्—விபூதி தரித்தல்.

होमभस्म सङ्गृह्य वामकरतले निधाय अ... ...च्य, अनामि-कया संपिष्य-

मा नस्तोके तनये मा न आयौ
मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामितो वधीः
हविष्मन्तः सदमित् त्वा हवामहे ॥ इति अभिमन्त्र्य,

मेधावी भूयासं स्वस्ति—इति ललाटे
तेजस्वी भूयासं स्वस्ति—इति उरसि
वर्चस्वी भूयासं स्वस्ति—इति दक्षिणभुजे
ब्रह्मवर्चसी भूयासं स्वस्ति—इति वामभुजे
आयुष्मान् भूयासं स्वस्ति—इति कण्ठे

अन्नादो भूयासं स्वस्ति इति उदरे
स्वस्ति इति .........शिरसि
स्वस्ति इति वदन् सर्वत्र च रक्षां धारयेत् ।
स्वस्ति श्रद्धां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ।
आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ॥
इति अग्निं प्रार्थ्य आचामेत् ॥

## समिदाधानविधिः समाप्तः ॥

குறிப்பு—ஸ்நாநம், ஸந்த்யாவந்தனம் இரண்டும் செய்தபின் ஸமிதாதானம் செய்ய வேண்டும். ஸாயங்காலத்தில் **'ஸாயம் ஸமிதமாதாஸ்யே'** என்று ஸங்கல்பம். தரையை ப்ரோக்ஷித்து அக்னியை வைத்து ஈரக்கையினால் அதனைச் சுற்றிலும் மும்முறை துடைத்து, பின் ஜலத்தை எடுத்து 'ஓம் பூர் புவஸ்ஸ்வ:' என்று மூன்று முறை சொல்லி, மந்திரம் சொல்லும் ஒவ்வொரு தடவையும் அக்னியைச்சுற்றிலும் ஜலம் விட வேண்டும். இதற்கு பரிஷேசனம் என்று பெயர்.

2-3 பின் **அக்னயே ஸமிதம்** என்கிற மந்திரத்தைச் சொல்லி அக்னியில் ஒரு ஸமித்தை வைத்து விட்டு, கையை ஜலத்தால் துடைத்துக் கொண்டு இரு உள்ளங்கைகளை அக்னியில் காய்ச்சி **தேஜஸா மா ஸமநஜ்மி** என்ற மந்திரத்தைச் சொல்லி மும்முறை முகத்தை மேலிருந்து கீழ்நோக்கித் துடைத்துக் கொள்ள வேண்டும்.

4 **உபஸ்தானம்.** பிறகு எழுந்து அக்னிக்கு அருகில் நின்று கைகூப்பி பக்தியுடன் **மயி மேதாம்** என்று தொடங்கும் ஆறு மந்த்ரங்களைச் சொல்ல வேண்டும். இதற்கு **உபஸ்தானம்** என்று பெயர். உபஸ்தானத்திற்குப் பின் நமஸ்காரம் செய்து அபிவாதனம் செய்து ஆசமனம் செய்ய வேண்டும்.

ஸமிதாதானத்தில் தரப்பட்டுள்ள மந்த்ரங்கள் ரிக் வேதத்தில் இல்லை. ஸூத்ரகாரர் கொடுத்திருக்கிறார். ஸூத்ரகாரர் கொடுத்த மந்த்ரங்களை ஒரே ஸ்வரத்துடன் (மூன்று ஸ்வரம் தேவையில்லை) சொல்ல வேண்டும் எனப் ப்ரமாணம் இருப்பதால் இம்மந்திரங்களுக்கு இங்கு ஸ்வரம் தரப்படவில்லை. **"அவிஜ்ஞாதஸ்வரோ மந்த்ர: ஸௌத்ர ஏகச்ருதி: பவேத்"** என்பது ப்ரயோக பாரிஜாத

ப்ரமாண வாக்யம் (பக்கம் 445). மஹரிஷி உபஸ்தானத்திற்காக **மயி மேதாம்** என்ற ஆறு மந்த்ரங்களைத் தான் கொடுத்திருக்கிறார். **ஓம் ச மே** என்பது கிருஹஸ்தர்களின் அக்னிஸந்தான உபஸ்தானத்தில் வருகின்றது. அதை இங்கேசிலர்சொல்கிறார்கள் என்பதால் அதுவும் தரப்பட்டுள்ளது. உண்மையில் அது ப்ரஹ்மசாரிக்கு விதிக்கப் பட்டது அல்ல. அக்னிக்கு ஸாஷ்டாங்க நமஸ்காரம் செய்து அபிவாதனம் செய்து ஆசமனம் செய்து முடிக்க வேண்டும்.

5. பஸ்மதாரணம் என்ற விபூதி தரித்தலை ஸ்மார்த்தர்கள் மாத்திரமே செய்வர். ஸ்ரீவைஷ்ணவர்கள் செய்வதில்லை. ஸூத்ரகாரரும் சொல்லவில்லை. **ஆசார ப்ராப்தம் பஸித தாரணம்** என்பர் ஹரதத்தர். ஸமிதாதானம் செய்த அக்னியிலிருந்து விபூதியை எடுத்து இடது உள்ளங்கையில் வைத்து ஜலத்தை விட்டு வலது கை மோதிர விரலால் குழைத்து மா னஸ்தோகே என்பதால் அபிமந்த்ரித்து, நெற்றி, மார்பு, வலது புஜம், இடது புஜம், வயிறு, சிரஸ், உடல்முழுவதும் என அந்தந்த மந்திரங்களைச் சொல்லித் தரித்தபின் ஆசனம் செய்ய வேண்டும்.

**ஸமிதாதான விளக்கம் முற்றும்.**

---

## ६. यज्ञोपवीतधारणक्रमः

स्नात्वा प्रातः सन्ध्यां कृत्वा, द्विराचम्य पवित्रपाणिः दर्भान् धृत्वा, प्राणान् आयम्य, श्रीमानित्यादि.......तिथौ इत्येतदन्तं उक्त्वा.......प्रीत्यर्थं श्रौतस्मार्तविहितनित्यकर्मानुष्ठानयोग्यतासिद्ध्यर्थं ब्रह्मतेजोऽभिवृद्ध्यर्थं च—यज्ञोपवीतधारणं करिष्ये, इति सङ्कल्प्य—अप उपस्पृश्य, सात्त्विकत्यागं कृत्वा—

यज्ञोपवीतं हस्तयोर्धरन्, दक्षिणपाणितलं उपरि ऊर्ध्वाभिमुखं, वामपाणितलं अधः अधोमुखं च विधाय-

यज्ञोपवीतं इत्यस्य मन्त्रस्य ब्रह्मा ऋषिः। त्रिष्टुप् छन्दः। परमात्मा (त्रयी विद्या वा) देवता। यज्ञोपवीतधारणे विनियोगः।

यज्ञोपवीतं परमं पवित्रं
प्रजापतेः यत्सहजं पुरस्तात् ।
आयुष्यमग्र्यं प्रति मुञ्च शुभ्रं
यज्ञोपवीतं बलमस्तु तेजः ॥ ओम् ॥

इति प्राङ्मुखः उदङ्मुखो वा कुक्कुटासनस्थः धारयेत् ।

गृहस्थश्चेत् सकृत आचम्य प्राणानायम्य.......प्रीत्यर्थं द्वितीययज्ञोपवीत-धारणं करिष्ये इति संकल्प्य-

ऋषिच्छन्दोदेवताकथनपूर्वकं यज्ञोपवीतमिति मन्त्रमुक्त्वा धारयेत् ॥

पवित्रग्रन्थिं विस्रस्य विसृज्य सकृदाचम्य धृतपूर्वं यज्ञोपवीतमवमुच्य—

उपवीतं जीर्णतन्तु कश्मलं मलदूषितम् ।
विसृजामि पुनर्ब्रह्मन् वर्चो दीर्घायुरस्तु मे ॥

इति शुद्धे जले स्थले वा विसृजेत् । सात्त्विकत्यागं च कुर्यात् ॥

## यज्ञोपवीतधारणक्रमः समाप्तः ॥

குறிப்பு:—ஸ்நாநம் ஸந்த்யாவந்தனம் இரண்டும் செய்த பிறகுதான் புதிய யஜ்ஞோபவீதம் தரிக்க வேண்டும். ஆசமனம் ப்ராணயாமம் செய்தபின் ஸ்ரீமான் என்று தொடங்கி அன்றைய திதி முதலியவற்றை சொல்லி ஸங்கல்பம் செய்து கொள்ள வேண்டும்.

யஜ்ஞோபவீதத்தை தாங்கும் வலது உள்ளங்கை மேல் நோக்கியும், இடது உள்ளங்கை கீழ் நோக்கியும் இருக்க வேண்டும். பிறகு யஜ்ஞோபவீதம் என்ற மந்த்ரத்தின் ரிஷி சந்தஸ் தேவதைகளைச் சொல்லி யஜ்ஞோபவீதம் என்ற மந்திரத்தை முற்றிலும் சொல்லிப் பூணூலை உபவீதமாகத் தரிக்க வேண்டும். போட்டுக் கொள்ளும் போது கிழக்கு நோக்கியோ வடக்கு நோக்கியோ குந்தின வகையில் உட்கார்ந்திருக்க வேண்டும். சப்பணம் இட்டு உட்காருதல் கூடாது.

கிருஹஸ்தராயின் ஆசமனம் ப்ராணயாமம் செய்து த்வீதீய யஜ்ஞோபவீத தாரணம் கரிஷ்யே என்று முன்போல் மந்த்ரங்களைச்

சொல்லி தரிக்க வேண்டும். சிலர் க்ருஹஸ்தாச்ரமஸித்த்யர்த்தம் என்று ஸங்கல்பம் செய்வர். இது தேவையில்லை. கிருஹஸ்தாச்ரமம் இரண்டாவது பூணூலால் வருவதில்லை. மூன்றாவது பூணூலைத் தரிக்கும் வழக்கமுடையவர், இரண்டாவது பூணூலைத் தரித்தது போலவே தரிக்க வேண்டும். ஸங்கல்பத்தில் த்ருதீயம் என்று சொல்ல வேண்டும்.

பழைய பூணூலை **'உபவீதம்'** என்ற சுலோகத்தைச் சொல்லி, விட்டு விடுகிறார்கள். சிலர் இச்சுலோகம் சொல்வதில்லை. ஆசமனம் செய்யும் போது பவித்ரம் கையில் இருக்கக் கூடாது. வலது காதில் வைத்துக் கொள்ளலாம். அல்லது தரையில் இலையின்மேல் வைக்கலாம். முடிவில் பவித்ரத்தின் முடிச்சை அவிழ்த்துப் போட்டு ஆசமனம் செய்ய வேண்டும். பவித்ரத்தைக் கீழே வைத்து ஆசமனம் செய்தவுடன் பவித்ரத்தை அவிழ்த்து விடுவர் சிலர். முடிச்சை அவிழ்க்காமல் பவித்ரத்தை விடுதல் கூடாது.

யஜ்ஞோபவீதம் என்ற மந்திரத்தை போதாயனர் தமது க்ருஹ்ய ஸூத்ர நூலில் இரண்டாவது ப்ரச்னம் ஐந்தாவது அத்யாயத்தில் ஏழாவது ஸூத்ரத்தில் கொடுத்திருக்கிறார். இது வேதத்தில் இல்லை. ஸூத்ர மந்த்ரமாதலால் ஒரே ஸ்வரத்தில் சொல்லலாம்.

**யஜ்ஞோபவீத தாரண விளக்கம் முற்றும்.**

---

## 7 விஷ்வக்ஸேந ஆராதனம்

எந்த கர்மாவைத் தொடங்குவதானாலும் அது இடையூறு இன்றி நடைபெற ஸ்மார்த்தர்கள் விக்னேச்வர பூஜையைத் தொடக்கத்தில் செய்கின்றனர். அதே போல் இடையூறுநீங்க, ஸ்ரீவைஷ்ணவர்களும் பகவானுடைய ஸேனைத்தலைவரான விஷ்வக்ஸேனரைப் பூஜிக்கின்றனர். இவை பெரும்பாலும் எல்லா சுப கர்மாக்களின் ஆரம்பத்தில் செய்யப்படும். சிற்சில சமயங்களில் செய்யப் படாமல் இருப்பதும் உண்டு.

வருணனை ஜலம் நிறைந்த கும்பத்தில் ஆவாஹனம் செய்வது போல் விஷ்வக்ஸேனரை பதினாறு தர்ப்பங்களாலானதும் முனையில் பவித்ர முடிச்சுடன் கூடியதுமான கூர்ச்சத்தில் அவரது மனைவி ஸூத்ரவதியுடனும் மற்றும் பரிவாரங்களுடனும் ஆவாஹனம் செய்வர். கூர்ச்சத்துடன் ஒரு சாண் நீளமுள்ள புஷ்ப ஸரம் ஒன்று சேர்த்து வைக்கப்படும், இது ஸூத்ரவதியைக் குறிக்கின்றது.

முதலில் யஜமானர் தாம் செய்யப்போகும் கர்மாவின் பெயரைக் குறிப்பிட்டு, அதைச் செய்வதற்கான நல்ல காலத்தை-அல்லது யோக்யதையைத் தனக்குத் தரும்படி பிராஹ்மணர்களின் அனுக்ரஹத்தை வேண்டுகிறார். இதற்கு அனுஜ்ஞை எனப்பெயர். பிராஹ்மணர்கள் அஸ்து என்று அனுக்ரஹித்தவுடன் ப்ராணாயாமம் செய்து திதி வார நக்ஷத்ராதிகளைக் குறிப்பிட்டு, 'விஷ்வக்ஸேந ஆராதனம் செய்யக்கடவேன்' என ஸங்கல்பம் செய்து கூர்ச்சத்தில் ஆவாஹனம் செய்து ஷோடச உபசாரங்களைக் கொடுத்து ஆராதனத்தை முடிக்க வேண்டும். பிறகு ப்ராணாயாமம் செய்து, செய்யப் போகின்ற கர்மாவிற்கான ஸங்கல்பம் செய்து ஸாத்விகத்யாகம் செய்தபின், ஸூத்ரவதீ ஸமேதரான விஷ்வக்ஸேனரை யதாஸ்தானம் அனுப்பிய பிறகு, அக்ஷதை தந்து பிராஹ்மண ஆசீர்வாதம் பெற்று, பிறகு யஜமானர் தாம் செய்ய உத்தேசித்த கர்மாவைத் தொடங்க வேண்டும். இந்த உதாஹரணத்திற்கு ஜாதகர்மம் செய்வதாக கர்ம குறிப்பிடப்பட்டுஉள்ளது. இதே முறைதான் விக்னேச்வரபூஜையிலும் பின்பற்றப் படுகிறது. ஸூத்ரகாரர் இவ்விரண்டு பூஜைகளைப் பற்றிச் சொல்லவில்லை. பெரியோர்களின் அனுஷ்டானத்தில் இருப்பதால் இங்கு தரப்பட்டுள்ளன. மஹா கணபதியை மஞ்சள் பொடியில் ஆவாஹனம் செய்கின்றனர்.

## ६. विष्वक्सेन-आराधनक्रमः

फलानि पुष्पाणि अक्षतान् ताम्बूलं दक्षिणाद्रव्यं चादाय-ओम् ,

नमो महद्भ्यः नमो अर्भकेभ्यः नमो युवभ्यः नम आशिनेभ्यः ।

यजाम देवान् यदि शक्नवाम मा ज्यायसः शंसमा वृक्षि देवाः ॥

हरिः ओम्, सर्वेभ्यो श्रीवैष्णवेभ्यः - ब्राह्मणेभ्यः- नमः इति प्रणम्य अक्षतान् समर्प्य—

स्वामिनः, भवत्पादमूले मया समर्पितां इमां सौवर्णीं दक्षिणां यथोक्तदक्षिणामिव सताम्बूलं स्वीकृत्य, अश्विनीनक्षत्रे मेषराशौ जातस्य मम कुमारस्य जातकर्मारम्भमूहूर्तः सुमुहूर्तोऽस्त्विति भवन्तो महान्तोऽनुगृह्णन्तु इति प्रार्थ्य- तथाऽस्तु इति प्रतिवचने दत्ते—

प्राणानायम्य — श्रीमान् वेंकटेत्यादि....हरिः ओं तत् .... अस्यां........ शुभतिथौ श्रीभगवदाज्ञया श्रीमन्नारायणप्रीत्यर्थं प्रारिप्सितस्य कर्मणः निर्विघ्नेन परिसमाप्त्यर्थं ऋद्ध्यर्थं च आदौ विष्वक्सेनाराधनं करिष्ये इति संकल्प्य-

अस्मिन् कूर्चे सपरिवारं सूत्रवतीसमेतं श्रीविष्वक्सेनं ध्यायामि। आवाहयामि। आसनं समर्पयामि। अर्घ्यं समर्पयामि। पादयोः पाद्यं समर्पयामि। वस्त्रार्थमक्षतान् समर्पयामि। यज्ञोपवीतार्थमक्षतान् समर्पयामि। गन्धान् धारयामि। पुष्पाणि समर्पयामि। धूपं समर्पयामि। दीपं समर्पयामि। ओं भूर्भुवस्स्वः। सत्यं त्वा ऋतेन परिषिञ्चामि। अमृतोपस्तरणमसि। ओं प्राणाय स्वाहा। अपानाय स्वाहा। व्यानाय स्वाहा। उदानाय स्वाहा। समानाय स्वाहा। ब्रह्मणे स्वाहा। विष्वक्सेनाय नमः, कदलीफलं निवेदयामि। अमृतापिधानमसि। आचमनीयं समर्पयामि। सदक्षिणाकं ताम्बूलं समर्पयामि। सर्वोपचारान् समर्पयामि।

प्राणनायम्य, अश्विनीनक्षत्रे मेषराशौ जातस्य मम कुमारस्य आयुरभिवृद्ध्यर्थं जातकर्माख्यं कर्म करिष्ये इति संकल्प्य सात्त्विकत्यागं कृत्वा—

सूत्रवतीसमेतं सपरिवारं विष्वक्सेनं यथास्थानं प्रतिष्ठापयामि इति उद्वास्य—

ऋध्यास्म हव्यैः नमसोमसद्य मित्रं देवं मित्रधेयं नो अस्तु।
अनूराधान् हविषा वर्धयन्तः शतं जीवेम शरदः सवीराः॥

इत्यादिभिः मन्त्रैः ब्राह्मणेभ्यः आशीर्वचनं प्राप्य, विष्वक्सेनप्रसादसिद्धिरस्तु इति तैः अनुगृहीतः विष्वक्सेनायार्पितं चन्दनादि आदाय यजमानः धारयेत्॥

विष्वक्सेनाराधनक्रमः समाप्तः॥

——

## ७. महागणपतिपूजाक्रमः

करिष्यमाणं कर्म कर्तुं योग्यताप्राप्त्यर्थं ब्राह्मणेभ्यः अनुज्ञां प्राप्य-उपविश्य—

शुक्लाम्बरधरं—इत्यादि—प्राणानायम्य अस्यां—शुभतिथौ ममोपात्तसमस्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं करिष्यमाणकर्मणः अविघ्नेन परिसमाप्त्यर्थं आदौ विघ्नेश्वरपूजां करिष्ये—अप उपस्पृश्य—

तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥

गणानां त्वा गृत्समदः गणपतिर्जगती । गणपत्यावाहने विनियोगः—

**गणानां त्वा गणपतिं हवामहे**
**कविं कवीनां उपमश्रवस्तमम् ।**
**ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते**
**आ नः शृण्वन् ऊतिभिः सीद सादनम् ॥**

अस्मिन् हरिद्रा (चूर्ण) बिम्बे महागणपतिं ध्यायामि । महागणपतिं आवाहयामि । आसनं समर्पयामि । अर्घ्यं समर्पयामि । पादयोः पाद्यं समर्पयामि । आचमनीयं समर्पयामि । स्नानं समर्पयामि । स्नानानन्तरमाचमनीयं समर्पयामि । वस्त्रार्थमक्षतान् समर्पयामि । उपवीतार्थमक्षतान् समर्पयामि । आभरणार्थं अक्षतान् समर्पयामि । गन्धान् धारयामि । गन्धोपरि अक्षतान् समर्पयामि । पुष्पाणि समर्पयामि ।

सुमुखाय नमः । एकदन्ताय नमः । कपिलाय नमः । गजकर्णाय-नमः । लम्बोदराय नमः । विकटाय नमः । विघ्नराजाय नमः । विनायकाय नमः । धूमकेतवे नमः । गणाध्यक्षाय नमः । फालचन्द्राय नमः । गजाननाय नमः । वक्रतुण्डाय नमः । शूर्पकर्णाय नमः । हेरम्बाय नमः । स्कन्दपूर्वजाय नमः । महागणपतये नमः । नानाविधपत्रपुष्पाणि समर्पयामि ।

धूपार्थमक्षतान् समर्पयामि । दीपार्थमक्षतान् समर्पयामि ।
ओं भूर्भुवःस्वः । सत्यं त्वा ऋतेन परिषिञ्चामि । अमृतोपस्तरणमसि । प्राणाय स्वाहा । अपानाय स्वाहा । व्यानाय स्वाहा । उदानाय स्वाहा । समानाय स्वाहा । ब्रह्मणे स्वाहा । महागणपतये नमः । कदलीफलं (नळिकेरखण्डं) निवेदयामि । नैवेद्यानन्तरमाचमनीयं समर्पयामि । ओं भूर्भुवःस्वः ।

पूगीफलसमायुक्तं नागवल्लीदळैर्युतम् ।
कर्पूरचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

महागणपतये नमः, कर्पूरताम्बूलं समर्पयामि । मन्त्रपुष्पं समर्पयामि । स्वर्णपुष्पं समर्पयामि । समस्तोपचारान् समर्पयामि । अनया पूजया महागणपतिः प्रीयताम् ।

वक्रतुण्ड महाकाय सूर्यकोटिसमप्रभ ।
अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥ अविघ्नमस्तु ।

अथ करिष्यमाणकर्मविषये संकल्पं कृत्वा । अप उपस्पृश्य—

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥

अस्मात् हरिद्राबिम्बात् महागणपतिं यथास्थानं प्रतिष्ठापयामि शोभनार्थे क्षेमाय पुनरागमनाय च, इति उद्वास्य-

ऋध्यास्म हव्यैः नमसोपसद्य मित्रं देवं मित्रधेयन्नो अस्तु ।
अनूराधान् हविषा वर्धयन्तः शतं जीवेम शरदः सवीराः ॥

महागणपतिप्रसादसिद्धिरस्तु इति ब्राह्मणैः दत्तान् अक्षतान् शिरसि धारयेत् । अथ कर्मसमारभेत ॥

## महागणपतिपूजाक्रमः समाप्तः

குறிப்பு:—அர்க்யம் பாத்யம் இவ்விரண்டு உபசாரங்களைத் தருவதில் சிறிது வேறு பாடு உண்டு. சிலர் பாத்யத்தை முதலில் கொடுத்து அர்க்யத்தைப் பிறகு தருவர்.

மஹாகணபதி பூஜை முறை விளக்கம் முற்றும்.

# 9. புண்யாஹ வாசனம்

புண்ய–அஹ–வாசனம் என்ற மூன்று சொற்களால் ஆன இப் பதத்திற்கு,''புண்யமான நாள் என்று சொல்லச் செய்தல்''என்பது பொருள். இந்த கர்மாவில் பிராஹ்மணர்களை, **புண்யாஹம் அஸ்து. ஸ்வஸ்தி அஸ்து, ரித்தி: அஸ்து** என்று யஜமானன் சொல்லச் செய்கின்றான். பிராஹ்மணர்கள் அவ்வாறு கூறுவதால் கர்மாவைச் செய்கின்ற தினத்தில் திதி வார நக்ஷத்ரங்களால் ஏதாவது குறை இருப்பினும் அது நீங்கி விடுகிறது. 'எந்த யஜமானன் புண்யாஹ வாசனம் செய்கின்றானோ அவன் செய்யும் சடங்கு எவ்விதத்திலும் குறைவு படுவதில்லை' என்பர் போதாயனர்.

य एवं विद्वान् पुण्याहं वाचयति नास्य कर्मोपहतं भवति ।

போதாயன க்ருஹ்ய பரிபாஷா-முதல் ப்ரச்னம்; நான்காம் அத்யாயம், பதினெட்டாவது ஸூத்ரம்.

இதனாலேயே ஒவ்வொரு கர்மாவின் தொடக்கத்தில் புண்யாஹ வாசனம் செய்யப்படுகிறது. முடிவிலும் செய்யப்பட வேண்டு மென்று சௌனகர் சொல்லியிருந்தாலும் சில கர்மாக்களில் மாத்திரமே முடிவில் செய்யப்படுகிறது. முடிவில் செய்யப்படும் புண்யாஹவாசனத்தில் பவமானமந்த்ரம் முதலியவற்றின் ஜபம் செய்யப்படுவதில்லை. மனுஷ்யர்கள், பொருட்கள் எல்லாவற்றையும் புண்யாஹவாசன ஜலத்தால் ப்ரோக்ஷித்து சுத்தி செய்வதால் இதை சுத்தி புண்யாஹ வாசனம் என்றும் சொல்வர்.

புண்யாஹ வாசனம் என்ற இக்கர்மாவின் முழு வடிவினையும் தெளிவாகத் தெரிந்து கொள்ள, இங்கு இது ஆறு பாகங்களாகக் காட்டப்பட்டிருக்கிறது. புண்யாஹ வாசனம் செய்யும் முறையை, ப்ரயோக நூல் ஆசிரியர்கள் பல வகையில் எழுதியிருக்கிறார்கள். இங்கு தரப்பட்டுள்ள முறையும் பல பெரியோர்களின் அனுஷ்டானத்தில் உள்ள ஒன்றாகும்.

**முதல் பாகம்.** இதில், யஜமானன் ஸ்நானம் ஸந்த்யை செய்த பிறகு, சுத்தம் செய்யப்பட்ட தரையில் நெல்லையும் அரிசியையும் இட்டு அதன் மேல் கும்பத்தை வைத்தல், அதற்கு மாவிலை முதலியன வைத்து அலங்கரித்தல், ஸங்கல்பம், பிராஹ்மண வரணம், பூஜை செய்து அவர்களை மகிழ்வித்தல், ச்ரத்தாஸூக்த ஜபம் செய்தல் என்ற இவை, அடங்கும்.

**இரண்டாம் பாகம்**. பிராஹ்மண ஆசீர்வாதம் பெறுதல், வருண பூஜை செய்தல் என்ற இவை இதில் செய்யப்படுகின்றன

**மூன்றும் பாகம்.** இதில் தான், புண்யாஹம் அஸ்து என்றும், ஸ்வஸ்தி அஸ்து என்றும், ரித்தி: அஸ்து என்றும் சொல்லும்படி பிராஹ்மணர்கள் வேண்டப்படுகிறார்கள். பிராஹ்மணர்கள் இம்மூன்றையும் சொல்லி மற்றும் பல ஆசீர்வாதங்களையும் செய்கின்றனர். உண்மையில் இந்தப் பகுதியில் வருவது தான் புண்யாஹ வாசனம். இது மிக முக்யமானது. இதற்கு முன் வந்துள்ளதும் இனி வரப்போவதும்,முறையே இதன் பூர்வாங்கமும் உத்தராங்கமுமாகும்.

**நான்காம் பகுதி**. இதில் பிராஹ்மணர்கள், பவமானம் முதலான நாற்பது ரிக்குகளை ஜபம் செய்து அதன் மூலம் கும்பத்திலுள்ள தீர்த்தத்தை பாவனமாக்குகின்றனர் என்பது உள்ளது.

**ஐந்தாம் பகுதி.** இதில் வருணனைத் உத்வாஸனம் செய்து கும்பத்தில் உள்ள தீர்த்தத்தை எடுத்து பிராஹ்மணர்கள், யஜமானனையும், அவருடைய மனைவி மக்கள் இவர்களையும், வீடு வாசல் முதலியவற்றையும் ப்ரோக்ஷிக்கின்றனர். சிலர் புண்யாஹ வாசன ஜலத்தை ப்ராசனம் (சாப்பிடுதல்) செய்கின்றனர். இத்துடன் புண்யாஹ வாசனம் முடிவடைந்து விடுகிறது. பிறகு பிராஹ்மணர்களுக்கு தக்ஷிணை தரப்படுகிறது.

**ஆறும் பாகம்**. சிலர் வருண ஆவாஹனம், வருண பூஜை இரண்டையும் ஸங்கல்பம் செய்தவுடன், முதற் பகுதியிலேயே செய்கின்றனர். அப்படியும் செய்யலாம். சிலர் கும்பத்தில் மாவிலை வைத்தல் முதலியவைகளையும் மந்த்ரம் சொல்லிச் செய்கின்றனர், பெரும்பாலோர் இவற்றைச் செய்வதில்லை. செய்ய விரும்புவர்களுக்காக, கும்ப ப்ரதிஷ்டைஸம்பந்தமான முழு விபரமும் இப்பாகத்தில் தரப்பட்டுள்ளது.

---

# ९. अथ पुण्याहवाचनक्रमः ।

## प्रथमो भागः

कर्ता स्नात्वा सन्ध्यामुपास्य, पादौ प्रक्षाळ्य, द्विराचम्य पवित्रपाणिः-

उपलिप्ते चतुरश्रे स्थण्डिले व्रीहीन् निधाय, तदुपरि निहिते प्रागग्रे कदलीपत्रे तण्डुलान्निक्षिप्य, तत्र मध्ये पद्मं विलिख्य, तदुपरि प्रागग्रान्-दर्भान् संस्तीर्य, तदुपरि कुम्भं निधाय, प्रणव-व्याहृतिभिः कुम्भं जलेन पूरयित्वा, कूर्च-आम्रपल्लवादिभिरलङ्कृत्य, नारिकेळेन अन्येन वा केनापि फलेन कुम्भद्वारं पिधाय—

प्राणान् आयम्य—शुक्लांबर...अस्यां.....शुभतिथौ.....प्रीत्यर्थम् आत्मशुद्ध्यर्थं शरीरशुद्ध्यर्थं गृहभूभाण्डशुद्ध्यर्थं कूपशुद्ध्यर्थं सर्वोपकरणशुद्ध्यर्थं एभिः श्रीवैष्णवैः - ब्राह्मणैः - सह शुद्धिपुण्याहवाचनं करिष्ये इति संकल्प्य, अप उपस्पृश्य - सात्त्विकत्यागं कुर्यात् —

ओम् स्वामिनः, भवद्भिरनुज्ञातः पुण्याहं वाचयिष्ये (यजमानवाक्यम्)

ओं वाच्यताम्—(ब्राह्मणप्रतिवचनम्)

पुण्याहे चतुरो ब्राह्मणान् तोषयिष्ये इति साक्षतं जलं भूमौ निस्राव्य—अस्मिन् पुण्याहकर्मणि ऋत्विजं त्वां वृणे इति प्राङ्मुखान् उदङ्मुखान् वा चतुरः ब्राह्मणान् पृथक् पृथक् वृणुयात् ॥

(अ) अथ ब्राह्मणतोषणम् (आ) श्रद्धासूक्तजपश्च —

*பிராஹ்மணர்களை மகிழ்வித்தலும் ச்ரத்தாஸூக்தஜபமும்.*

(अ) अथ कर्ता ब्राह्मणान् पूजयेत् ।

| कर्त्रा दानम् | | ब्राह्मणैः प्रतिग्रहः |
|---|---|---|
| १. ओम् आपः | — | शिवाः आपः सन्तु । |
| २. ओम् गन्धाः | — | सुगन्धाः पान्तु । |
| ३. ओम् सुमनसः | — | सौमनस्यं अस्तु । |
| ४. ओम् अक्षतम् | — | अक्षतं चारिष्टं च अस्तु । |
| ५. ओम् अन्वाहार्यः | — | स्वन्वाहार्यः अस्तु । |
| ६. ओम् दक्षिणाः | — | स्वस्ति - दक्षिणाः पान्तु । बहुदेयं अस्तु ॥ |

(आ) श्रद्धासूक्तजपः—ச்ரத்தாஸூக்த ஜபம்.

१. श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥

२. प्रियं श्रद्धे ददतः प्रियं श्रद्धे दिदासतः ।
प्रियं भोजेषु यज्वसु इदं म उदितं कृधि ॥

३. यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे ।
एवं भोजेषु यज्वसु अस्माकमुदितं कृधि ॥

४. श्रद्धां देवा यजमाना वायुगोपा उपासते ।
श्रद्धां हृदय्य१याकूत्या श्रद्धया विन्दते वसु ॥

५. श्रद्धां प्रातर्हवामहे श्रद्धां मध्यं दिनं परि ।
श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेह नः ॥

**குறிப்பு**—யஜமானன் ஸ்நாநம் ஸந்த்யை இரண்டும் செய்த பிறகு புண்யாஹ வாசனம் செய்ய வேண்டும். புண்யாஹம் என்ற நல்வார்த்தை கூறுவதற்காகவும் மந்த்ர ஜபம் செய்வதற்காகவும் நான்கு பிராஹ்மணர்களை அழைத்துவரவேண்டும். கோமய ஜலத்தினுல் சுத்தம் செய்யப்பட்ட ஸமசதுரமான ஸ்தலத்தில்கோலமிட்ட தரையில் நெல்லைப் பரப்பி, அதன் மேல் கிழக்கு நுனியாக வாழை இலையை வைத்து அதன் மேல் அரிசியைப் பரப்பி, அதன் மேல் தாமரை மலரின் வடிவினை எழுதி, கிழக்கு நுனியாக நான்கு தர்ப்பங்களை இட்டு. ஒரு கும்பத்தை வைத்து, **ஓம் பூர்புவஸ்ஸுவ:** என்று கும்பத்தை தீர்த்தத்தினுல் நிரப்பி, மாவிலை கூர்ச்சம் இவற்றைக் கும்பத்தில் வைத்து, தேங்காய்—மாம்பழம் முதலான ஏதாவதொரு பழத்தினுல் கும்பத்தை மூடியபிறகு. கர்த்தா பவித்ரபாணியாக ப்ராணுயாமம் செய்து ஸங்கல்பம் செய்து கொள்ளவேண்டும்.

ச்ராத்ததினத்தில் செய்யப்படும் புண்யாஹவாசனமானுல் **ச்ராத்தோபகரண சுத்த்யர்த்தம்** என்று ஸங்கல்பத்தில் சேர்த்துக் கொள்ள வேண்டும்.

பிறகு, ஜபம் செய்யப்போகின்ற பிராஹ்மணர்களுக்கு தீர்த்தம், சந்தனம், புஷ்பம், அக்ஷதை, போஜனம், தக்ஷிணை இவைகளை யஜமானன் கொடுக்க,பிராஹ்மணர்கள் அவற்றை ஏற்பர். **ஓம் ஆப:** என்று கர்த்தா தீர்த்தம் தருவார். **சிவா: ஆப: ஸந்து** என்று கூறி பிராஹ்மணர்கள் வாங்கிக் கொள்வர். பிறபொருள்களும் இவ்வாறு தரப்படும். (அ) என்பதனைப் பார்க்க. தற்காலத்தில் இப்பொருள்கள் தரப்படுவன இல்லை. மந்த்ரங்களை மாத்திரமே சொல்கிருர்கள்.

புண்யாஹவாசன ஸங்கல்பம் முடிந்தவுடனேயே கும்பத்தை வைத்து அதில் வருண தேவதையின் ஆவாஹனத்தைச் செய்வர் சிலர். மற்றும்சிலர் பிராஹ்மணபூஜையைச்செய்தபின் ப்ராஹ்மணர்களின் ஆசீர்வாதத்தைப் பெற்ற பிறகு, வருண ஆவாஹனத்தையும் வருண பூஜையையும் செய்கின்றனர். இரண்டு முறைகளும் சரியானவையே. இந்த நூலில் இரண்டாவதாகக் குறிப்பிடப்பட்ட முறை தரப்பட்டுள்ளது.

(ஆ) பிராஹ்மணர்களை மகிழ்வித்த பிறகு **ச்ரத்தயாக்னி:** என்று தொடங்கும் ச்ரத்தாஸூக்த ஜபம் செய்யப்படுகிறது.

जपित्वा तु श्रद्धयाऽग्निम् (சௌனகீயம் 3-4) என்ற வாக்யத்தால் சௌனகர் புண்யாஹவாசனத்தில் இந்தஸூக்த ஜபத்தை விதித்திருக்கிருர். ஜபம் செய்யும் போது யஜமானர் தர்ப்பத்தினுல் கும்பத்தை ஸ்பர்சித்துக் கொடிண்ருக்கவேண்டும்.

## २. द्वितीयः भागः

### (अ) ब्राह्मणैराशीर्वचनकथनम्—

स्वामिनः, ओम्, मनस्समाधीयताम् – (कर्तुः प्रार्थना)

समाहितमनसः स्मः – (ब्राह्मणप्रतिवचनम्)

प्रसीदन्तु भवन्तः – (कर्तुः प्रार्थना)

प्रसन्नाः स्मः – (ब्राह्मणप्रतिवचनम्)

| कर्तुः प्रार्थना | | ब्राह्मणानामाशीर्वचनम् |
|---|---|---|
| १. ओं शान्तिः | — | अस्तु |
| २. ओं पुष्टिः | — | अस्तु |
| ३. ओं तुष्टिः | — | अस्तु |
| ४. ओं ऋद्धिः | — | अस्तु |
| ५. ओं अविघ्नम् | — | अस्तु |
| ६. ओं आयुष्यम् | — | अस्तु |
| ७. ओं आरोग्यम् | — | अस्तु |
| ८. ओं शिवं कर्म | — | अस्तु |
| ९. ओं धनधान्यसमृद्धिः | — | अस्तु |
| १०. ओं अरिष्टनिरसनम् | — | अस्तु (ऐशान्याम्) |
| ११. ओं यत्पापम् तत् प्रतिहतम् | — | अस्तु (आग्नेय्याम्) |
| १२. ओं उत्तरे कर्मण्यविघ्नम् | — | अस्तु |
| १३. ओं सर्वाः सम्पदः | — | सन्तु |
| १४. ओं सर्वशोभनम् | — | अस्तु |
| १५. ओं शान्तिः शान्तिः शान्तिः | — | |

प्रतिप्रतिवचनावसाने उदपात्रात् कस्माच्चित् उद्धरिण्या किञ्चित्-किञ्चित् जलमादाय अन्यस्मिन् पात्रे निनीय, निनीतं जलं अन्ते कुम्भे निनयेत् ॥ 'अरिष्टनिरसनम् अस्तु' इति प्रतिवचने सति, ऐशान्यां दिशि, 'यत्पापं तत्प्रतिहतमस्तु' इति प्रतिवचने सति, आग्नेय्यां दिशि च, उद्धृतं जलं क्षिपेत् । जलनिनयनादिकं न कर्तव्यमिति बहवः ॥

(आ) वरुणावाहनं तत्पूजा च—

१. इमं मे वरुण श्रुधी हवं अद्या च मृळय । त्वामवस्युरा चके ॥

२. तत्त्वा यामि ब्रह्मणा वन्दमानः तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोधि उरुशंस मा नः आयुः प्रमोषीः ॥

अस्मिन् कुम्भे वरुणं ध्यायामि । वरुणमावाहयामि । वरुणस्येदमासनम् इदमर्घ्यम् । इदं पाद्यम् । इदमाचमनीयम् । इदं स्नानम् । इदमाचमनीयम् । वस्त्रार्थे अक्षतान् समर्पयामि । उपवीतार्थे अक्षतान् समर्पयामि । धूमदीपार्थे अक्षतान् समर्पयामि । एते उत्तरीयाद्याभरणार्थे अक्षताः ॥

ओं भूर्भुवस्स्वः । सत्यं त्वा ऋतेन परिषिञ्चामि । अमृतोपस्तरणमसि । ओं प्राणाय स्वाहा । ओं अपानाय स्वाहा । ओं व्यानाय स्वाहा । ओं उदानाय स्वाहा । ओं समानाय स्वाहा । ओं ब्रह्मणे स्वाहा । वरुणाय नमः, गुडोपहारं (कदलीफलं) निवेदयामि । अमृतापिधानमसि । आचमनीयं समर्पयामि । ताम्बूलं समर्पयामि । स्वर्णपुष्पं समर्पयामि । सर्वोपचारान् समर्पयामि ॥ वरुणाय नमः, सकलाराधनैः अर्चितम् ॥ इति वरुण पूजां कृत्वा—

**2.** (அ)குறிப்பு பிராஹ்மணர்களின் ஆசீர்வாதம், ச்ரத்தாஸூக்த ஜபத்திற்குப் பிறகு செய்யப்படுகிறது. கர்த்தா முதல் இரண்டு வாக்யங்களால் புண்யாஹவாசனத்தில் மனம் ஈடுபட்டு மகிழ்ச்சியுடன் இருக்கும்படி பிராஹ்மணர்களை வேண்டிக்கொள்கிறான்.

பிறகு, **சாந்தி:** என்று தொடங்கி **சிவம்** என்ற வரையுள்ள எட்டு நன்மைகளைத் தரும்படி வேண்டுகின்றான். அவர்களும் **அஸ்து** என்று சொல்லி ஆசீர்வதிக்கின்றனர். இந்த எட்டு ஆசீர்வாதங்களைத்தான் போதாயனர் குறிப்பிட்டிருக்கிறார். இவை தவிர வேறு சில ஆசீர்வாதங்களையும் கேட்கலாம் என சௌனகர் சொல்லியிருப்பதால் மேலும் ஆறு ஆசீர்வாதங்கள் கேட்கப்படுகின்றன. आशीर्वादान्यथान्यानि विविधानि च वाचयेत्(शौनकीयम्-3- சு.8) என்பது அவர் வசனம். நான்காவது எட்டாவது ஆசீர்வாதங்களில் இந்த ஆறும் அடங்குமாகையால் இவை வேண்டப்படுவன அல்ல என்பர் க்ருஷ்யரத்னகண்டபூஷணகாரர். சிலர் ஆசீர்வாதம் ஒவ்வொன்றும் சொல்லப்படும்போது மாவிலையாலோ உத்தரிணியாலோ கும்பத்திலிருந்து சிறிது தீர்த்தம் எடுத்து ஒரு தொன்னையில் விட்டு ஆசீர்வாத வசனம் முடிந்தவுடன் தொன்னை ஜலத்தை கும்பத்தில் சேர்ப்பர். கும்பத்திலிருந்து எடுக்காமல் வேறு பாத்திரத்திலிருந்து எடுத்துச் சேர்ப்பது தான் சரியான முறை. **அரிஷ்ட நிரஸனமஸ்து** என்கிற போது வடகிழக்கிலும், **யத் பாபம் தத் ப்ரதிஹதமஸ்து** என்கிற போது தென்கிழக்கிலும், தீர்த்தத்தை விட வேண்டும்.

இப்படி ஜலம் எடுத்து கும்பத்தில் சேர்க்க வேண்டாம் என்ற அபிப்ராயம் உடைய சிஷ்டர்களும் உண்டு.

2-(ஆ) வருண ஆவாஹனமும் வருண பூஜையும். **இமம் மே** என்ற மந்த்ரம் சொல்லாமல் **தத் த்வா** யாமி என்பதை மாத்திரம் சொல்லியும் கும்பத்தில் வருணாவாஹனம் செய்யலாம். ஆவாஹனம் செய்த பின் ஷோடச உபசார பூஜை செய்து முடிக்க வேண்டும். இதம் ஆஸனம், இதம் அர்க்யம், என்பதற்குப்பதிலாக ஆஸனம் ஸமர்ப்பயாமி, அர்க்யம் ஸமர்ப்பயாமி என்றும் சொல்லி ஆஸனம் முதலியவை தரலாம். இச்சிறு மாறுபாடுகளால் கர்மாவில் எவ்விதக் குறைவும் ஏற்படாது.

## तृतीयो भागः

## पुण्याहकालवाचनम्

स्वामिनः, ओं पुण्याहकालो वाच्यताम् (कर्तृवचनम्)

१. अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे ।
पृथिव्याः सप्त धामभिः ॥

२. इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् ।
समूळ्हमस्य पांसुरे ॥

३. त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः ।
अतो धर्माणि धारयन् ॥

४. विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे ।
इन्द्रस्य युज्यः सखा ।

५. तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥

६. तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ॥ [ऋ. १. २२. १६-२१]

७. उद्गातेव शकुने साम गायसि

ब्रह्मपुत्र इव सवनेषु शंससि ।

वृषेव वाजी शिशुमतीरपीत्या

सर्वतो नः शकुने भद्रमा वद

विश्वतो नः शकुने पुण्यमा वद ॥ [ऋ. २. ४३. २.]

ओं पुण्याहं भवन्तो ब्रुवन्तु – (यजमानप्रार्थना)
ओं पुण्याहमस्तु - इति त्रिः – (ब्राह्मणप्रतिवचनम्)

८. स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।

स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

[ऋ. १. ८९-६]

ओं स्वस्ति भवन्तो ब्रुवन्तु – (यजमानप्रार्थना)
ओं स्वस्ति अस्तु - इति त्रिः – (ब्राह्मणप्रतिवचनम्)

९. ऋध्याम स्तोमं सनुयाम वाजम्

आ नो मन्त्रं सरथेहोप यातम् ।

यशो न पक्वं मधु गोष्वन्तरा

भूतांशो अश्विनोः काममप्राः ॥ [ऋ. १०. १०६-११]

ओं ऋद्धिं भवन्तो ब्रुवन्तु — (यजमानप्रार्थना)

ओं ऋध्यताम्- इति त्रिः — (ब्राह्मणप्रतिवचनम्)

ओं पुण्याहसमृद्धिरस्तु — (यजमानप्रार्थना)

ओं पुण्याहसमृद्धिरस्तु — (ब्राह्मणप्रतिवचनम्)

ओं शिवं कर्म अस्तु — (यजमानप्रार्थना)

ओं शिवं कर्मास्तु — (ब्राह्मणप्रतिवचनम्)

ओं प्रजापतिः प्रीयताम् — (यजमानप्रार्थना)

ओं प्रीयतां प्रजापतिः — (ब्राह्मणप्रतिवचनम्)

**குறிப்பு:** — புண்யாஹம் **என்று** சொல்ல வேண்டுதலும் பிராஹ்மணர்கள் அதனைக் கூறுதலும்.

இந்தப் பகுதியில் கூறப்பட்டுள்ளதுதான் புண்யாஹ வாசனம் என்ற கர்மா ஆகும். இப்பகுதியில் தரப்பட்டுள்ளதெல்லாம் சௌனகீயத்தில் கூறியபடி உள்ளது. சிறிதும் மாறுதல் இல்லை.

யஜமானன் வருணபூஜை முடித்த பின் பிராஹ்மணர்களிடம் **புண்யாஹம்** என இக் காலத்தைக் கூறவேண்டும் என பிரார்த்தித்து விட்டு, எல்லா நற்காரியங்களிலும் கூறப்பட வேண்டிய **அதோ தேவா:** என்று தொடங்கி ஆறு ரிக்குகள் கொண்ட விஷ்ணு ஸூக்தத்தையும், **உத்காதேவ** என்று தொடங்கும் கபிஞ்ஜல ஸூக்த ரிக்கு ஒன்றையும் கூறி, இந்த தினம் புண்யாஹமாக இருக்கட்டும் எனக் கூறுங்கள் என பிராஹ்மணர்களை வேண்ட, அவர்கள் **ஓம் புண்யாஹம் அஸ்து** என்று மூன்று முறை கூறுவர். பின் **ஸ்வஸ்தி ந:** என்ற ரிக்கைச் சொல்லி **ஸ்வஸ்தி அஸ்து** (நன்மை உண்டாகட்டும்) எனத் தாங்கள் கூறவேண்டும் என பிரார்த்திக்க, அவர்களும் **ஓம் ஸ்வஸ்தி அஸ்து** என மூன்று முறை கூறுவர். பிறகு **ரித்யாம:** என்ற ரிக்கைச் சொல்லி **ரித்தி: அஸ்து** (செழிப்பு உண்டாகட்டும்) எனத் தாங்கள் கூறவேண்டும் என வேண்ட, அவர்களும் ஓம் **ரித்யதாம்** என மும்முறை கூறுவர். சிலர் **ரித்யதாம், ரித்தி: ஸம்ருத்தி:** என்பர். மேலும் யஜமானன், 'புண்யாஹ ஸம்ருத்தி வேண்டும்' நல்ல கர்மாவாக இது ஆக வேண்டும். தேவதையான பிரஜாபதி மகிழ வேண்டும். என்ற மூன்று வேண்டுகோள்களைச்செய்ய, பிராஹ்மணர்களும் அவற்றை அனுக்ரஹிக்கிறார்கள். புண்யாஹவாசனத்தின் ஸாரமான அம்சம் இங்கு கூறப்பட்டுள்ளதுதான்.

## चतुर्थो भागः

### पुण्याहवाचनमन्त्रजपः

अथ यजमानः ब्राह्मणाश्च कुशैः कुम्भमन्वारभ्य जपेयुः ॥

(अ) १. दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः ।
सुरभि नो मुखा करत् प्रण आयूंषि तारिषत् ॥[ऋ.४.३९-६]

(आ) १. आपो हि ष्ठा मयो भुवः ता न ऊर्जे दधातन ।
महे रणाय चक्षसे ॥

२. यो वः शिवतमो रसः तस्य भाजयतेह नः ।
उशतीरिव मातरः ॥

३. तस्मा अरं गमाम वो यस्य क्षयाय जिन्वथ ।
आपो जनयथा च नः ॥

४. शं नो देवीरभीष्टये आपो भवन्तु पीतये ।
शं योरभि स्रवन्तु नः ॥

५. ईशाना वार्याणां क्षयन्तीश्चर्षणीनाम् ।
अपो याचामि भेषजम् ॥

६. अप्सु मे सोमो अब्रवीत् अन्तर्विश्वानि भेषजा।
अग्निं च विश्वशंभुवम् ॥

७. आपः पृणीत भेषजं वरूथं तन्वे३ मम।
ज्योक् च सूर्यं दृशे ॥

८. इदमापः प्र वहत यत्किं च दुरितं मयि।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥

९. आपो अद्यान्वचारिषं रसेन समगस्महि।
पयस्वानग्न आ गहि तं मा सं सृज वर्चसा ॥

[ऋ. १०. ९. १-९]

(इ) १. एतो न्विन्द्रं स्तवाम शुद्धं शुद्धेन साम्ना।
शुद्धैरुक्थैर्वावृध्वांसं शुद्ध आशीर्वान् ममत्तु ॥

२. इन्द्र शुद्धो न आ गहि शुद्धः शुद्धाभिरूतिभिः।
शुद्धो रयिं नि धारय शुद्धो ममद्धि सोम्यः ॥

३. इन्द्र शुद्धो हि नो रयिं शुद्धो रत्नानि दाशुषे।
शुद्धो वृत्राणि जिघ्नसे शुद्धो वाजं सिषासति ॥

[ऋ. ८. ९५. ७-९]

(ई) १. तरत्स मन्दी धावति धारा सुतस्यान्धसः ।
तरत्स मन्दी धावति ॥

२. उस्रा वेद वसूनां मर्तस्य देव्यवसः ।
तरत्स मन्दी धावति ॥

३. ध्वस्रयोः पुरुषन्त्योरा सहस्राणि च दद्महे ।
तरत्स मन्दी धावति ॥

४. आ ययोस्त्रिंशतं तना सहस्राणि च दद्महे ।
तरत्स मन्दी धावति ॥ [ऋ. ९. ५८. १-४]

(उ) १. पवस्व सोम मन्दयन्निन्द्राय मधुमत्तमः ॥

२. असृग्रन् देववीतये वाजयन्तो रथा इव ॥

३. ते सुतासो मदिन्तमाः शुक्रा वायुमसृक्षत ॥

४. ग्राव्णा तुन्नो अभिष्टुतः पवित्रं सोम गच्छसि ।
दधत्स्तोत्रे सुवीर्यम् ॥

५. एष तुन्नो अभिष्टुतः पवित्रमति गाहते ।
रक्षोहा वारमव्ययम् ॥

६. यदन्ति यच्च दूरके भयं विन्दति मामिह ॥
पवमान वि तज्जहि ॥

७. पवमानः सो अद्य नः पवित्रेण विचर्षणिः ।
यः पोता स पुनातु नः ॥

८. यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा ।
ब्रह्म तेन पुनीहि नः ॥

९. यत्ते पवित्रमर्चिवदग्ने तेन पुनीहि नः ।
ब्रह्मसवैः पुनीहि नः ॥

१०. उभाभ्यां देव सवितः पवित्रेण सवेन च ।
मां पुनीहि विश्वतः ॥

११. त्रिभिष्ट्वं देव सवितः वर्षिष्ठैः सोम धामभिः ।
अग्ने दक्षैः पुनीहि नः ॥

१२. पुनन्तु मां देवजनाः पुनन्तु वसवो धिया ।
विश्वे देवाः पुनीत मा जातवेदः पुनीहि मा ॥

१३. प्र प्यायस्व प्र स्यन्दस्व सोम विश्वेभिरंशुभिः ।

देवेभ्यः उत्तमं हविः ॥

१४. उप प्रियं पनिप्नतं युवानमाहुतीवृधम् ।

अगन्म बिभ्रतो नमः ॥

१५. अलाय्यस्य परशुर्ननाश तमा पवस्व देव सोम ।

आखुं चिदेव देव सोम ॥

१६. यः पावमानीरध्येति ऋषिभिः सम्भृतं रसम् ।

सर्वं स पूतमश्नाति स्वदितं मातरिश्वना ॥

१७. पावमानीर्यो अध्येति ऋषिभिः सम्भृतं रसम् ।

तस्मै सरस्वती दुहे क्षीरं सर्पिर्मधूदकम् ॥

[ऋ. ९. ६७. १६-३२]

(ऊ) १. भद्रं नो अपि वातय मनः ॥ [ऋ. १०. २०. १]

(ऋ १. पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः ।

ऋषिभिः संभृतो रसः ब्राह्मणेष्वमृतं हितम् ॥

२. पावमानीर्दिशन्तु न इमं लोकमथो अमुम् ।
कामान् समर्धयन्तु नः देवैर्देवीः समाहिताः ॥

३. येन देवाः पवित्रेणात्मानं पुनते सदा ।
तेन सहस्रधारेण पावमान्यः पुनन्तु माम् ॥

४. प्राजापत्यं पवित्रं शतोद्यामं हिरण्मयम् ।
तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ॥

५. इन्द्रः सु(पु)नीति सह मा पुनातु
सोमः स्वस्त्या वरुणः समीच्या ।
यमो राजा प्रमृणाभिः पुनातु मा
जातवेदा मो(मू)र्जयन्त्या पुनातु ॥ [खिलम् ३.१०.१.५]

(ऋ) तच्छंयोरा वृणीमहे गातुं यज्ञाय गातुं यज्ञपतये ।
दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः ।
ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे ॥
[खिलम् ५.१.५]

ओं शान्तिः शान्तिः शान्तिः ॥

குறிப்பு:— *புண்யாஹ வாசன ஜபத்தில் நாற்பத்து ஒன்று ரிக்குள் செல்லப்படுகின்றன. பவமானம் என்ற ரிக்குகள் இவற்றில் பெரும் பாலும் இருப்பதால் இவை பவமான மந்த்ரங்கள் எனவும் பெயர் பெற்றன.*

ஒன்று முதல், முப்பத்தைந்தாவது ரிக்கான பத்ரம் நோ அபி வாதய மந: என்பது வரை சொல்லி, ஓம் சாந்தி: சாந்தி: சாந்தி: என்பதையும் சொல்லி ஜபத்தைப் பலர் முடித்து விடுவர். சிலர் மேலும் தந்துள்ள ஆறு ரிக்குகளையும் சொல்வர். இந்த ஆறு மந்த்ரங்களும், சிறிது பாட பேதத்துடன் யஜுர் வேதிகளின் புண்யாஹவாசனத்தில் உள்ளன. அது காரணமாகவே சிலர் இவைகளை ரிக் வேதிகளின் புண்யாகவாசனத்தில் சேர்த்திருக்கலாம்.

## पञ्चमो भागः

## वरुणोद्वासनम् प्रोक्षणं च

वरुणाय नमः, सकलाराधनैः स्वर्चितम् ।

तत्त्वा यामि ब्रह्मणा वन्दमानः तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोधि उरुशंस मानः आयुः प्रमोषिः ॥
[ऋ. १-२४-११]

अस्मात् कुम्भाद्वरुणं यथास्थानं प्रतिष्ठापयामि शोभनार्थं क्षेमाय पुनरागमनाय च - इति कुम्भसमीपे अक्षतान् समर्प्य वरुणोद्वासनं कुर्यात् ॥

अथ ब्रह्मणाः कूर्चेन आम्रपल्लवैश्च कुम्भात् जलमादाय सपरिवारं यजमानं प्रोक्षेयुः ।

### जनप्रोक्षणमन्त्राः

१. ओं भूर्भुवः स्वः । [ऐ.ब्रा.अ.२५.ख.७]

२. अग्निः शुचिव्रततमः शुचिर्विप्रः शुचिः कविः ।
शुची रोचत आहुतः ॥ [ऋ.८.४४.२१]

३. उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते ।
तव ज्योतींष्यर्चयः ॥ [ऋ.८.४४.१७]

## गृहभूभाण्डादिप्रोक्षणमन्त्राः

१. वास्तोष्पते प्रति जानीह्यस्मान्

स्वावेशो अनमीवो भवा नः ॥

यत् त्वेमहे प्रति तन्नो जुषस्व

शं नो भव द्विपदे शं चतुष्पदे ॥

२. वास्तोष्पते प्रतरणो न एधि

गयस्फानो गोभिरश्वेभिरिन्दो ।

अजरासस्ते सख्ये स्याम

पितेव पुत्रान् प्रति नो जुषस्व ॥

३. वास्तोष्पते शग्मया संसदा ते

सक्षीमहि रण्वया गातुमत्या ।

पाहि क्षेम उत योगे वरं नः

यूयं पात स्वस्तिभिः सदा नः ॥ [ऋ.७.५४.१.३]

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ।

सखा सुशेव एधि नः ॥ [ऋ.७.५५.१]

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।

यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥

ओम्, भूर्भुवःस्वो भूर्भुवःस्वो भूर्भुवस्वः, ओम् ॥

आचम्य सात्त्विकत्यागं कृत्वा ब्राह्मणेभ्यो दक्षिणां दद्यात् ।

**जपकर्तृभ्यः दक्षिणादानाय वाक्यम्—**

हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।
अनन्तपुण्यफलदमतः (दः) शान्तिं प्रयच्छ मे ॥

अद्यकृतपुण्याहवाचनजपकर्तृभ्यः भवद्भ्यः तत्फलस्वीकरणाय यत्किञ्चित् हिरण्यदानं करिष्ये इति ॥

अकालमृत्युहरणं सर्वव्याधिनिवारणम् ।
सर्वपापक्षयकरं मन्त्रपूतोदकं शुभम् ॥

इति कुम्भजलं केचित् प्राश्नन्ति ॥

**पुण्याहवाचनक्रमः समाप्तः ॥**

**குறிப்பு:—** வருண உத்வாஸனம், ப்ரோக்ஷணம் முதலியன வருணோத்வாஸனம் செய்தபின் கூர்ச்சத்திலும் மாவிலைகளாலும் கும்பத்திலிருந்து தீர்த்தத்தை எடுத்து பிராஹ்மணர்கள், யஜமானனையும் அவன் குடும்பத்தினரையும் ப்ரோக்ஷிக்க வேண்டும்.

**அக்னி: சுசி:** என்பதும், **உதக்னே** என்பதும் மனுஷ்யர்களை ப்ரோக்ஷிப்பதற்கான மந்த்ரங்கள். **வாஸ்தோஷ்பதே** என்று தொடங்கும் நான்கு மந்தரங்கள் வீடு முதலியவற்றை ப்ரோக்ஷிக்க உபயோகிக்கப்படும் மந்த்ரங்கள்.

**ஓம் பூர்வஸ்ஸ்வ:** என்பதும் **ஆபோஹிஷ்டா:** என்ற மூன்று ரிக்குகளும் மனுஷ்யர்களையும் வீடு முதலியவற்றையும் ப்ரோக்ஷிக்க உபயோகமான பொது மந்த்ரங்கள். **அகால ம்ருத்யு ஹரணம்** என்பதைச் சொல்லி புண்யாஹவாசன தீர்த்தத்தை ஸ்மார்த்தர்களில் சிலர் ப்ராசனம் செய்கின்றனர். வைஷ்ணவர்கள் சாப்பிடுவதில்லை. ப்ரோக்ஷணம் ப்ராசனம் இவற்றிக்குப் பிறகு எஞ்சியுள்ள தீர்த்தத்தை கிணற்றில் சேர்ப்பது வழக்கம்.

கும்பத்தில் வைத்த கூர்ச்சத்தின் முடிச்சை அவிழ்த்து அதை விட்டு விடவேண்டும்.

**புண்யாஹ வாசன விளக்கம் முற்றுப் பெற்றது.**

## षष्ठो भागः

(अनुबन्धः)

### पुण्याहवाचन-कुम्भस्थापन-क्रमः

उपलिप्तायां भूमौ धान्यराशिं निक्षिप्य, तदुपरि तण्डुलं निधाय, तण्डुलोपरि पद्मं विलिख्य, तदुपरि प्रागग्रान् दर्भानास्तीर्य, तदुपरि तन्तुवेष्टितकुम्भं निधाय-

भूमिं स्पृष्ट्वा–

१. स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः । इति भूमिं प्रार्थ्य- [ऋ.१.२२.१५]

धान्यं स्पृष्ट्वा—

२. येन तोकाय तनयाय धान्यं बीजं वहध्वे अक्षितम् । अस्मभ्यं तद् धत्तन यद् व ईमहे राधो विश्वायु सौभगम् ।। इति धान्यं प्रार्थ्य- [ऋ.५.५३.१३]

कलशं स्पृष्ट्वा—

३. आ कलशेषु धावति श्येनो वर्म वि गाहते ।
अभि द्रोणा कनिक्रदत् ।। (ऋ. ९. ६७-१४)

४. तन्तुं तन्वन् रजसो भानुमन्विहि
ज्योतिष्मतः पथो रक्ष धिया कृतान् ।
अनुल्बणं वयत जोगुवामपः
मनुर्भव जनया दैव्यं जनम् ।। (ऋ.१०.५३.६)

५. रुवति भीमो वृषभस्तविष्यया
शृङ्गे शिशानो हरिणी विचक्षणः ।

आ योनिं सोमः सुकृतं नि षीदति
गव्ययी त्वग्भवति निर्णिगव्ययी ॥ (ऋ.९.७०.७)

इति कुम्भं प्रार्थ्य—

६. इमं मे गङ्गे यमुने सरस्वती शुतुद्रि स्तोमं सचता परुष्ण्या ।
असिक्न्या मरुद्वृधे वितस्तया आर्जीकीये शृणुह्या सुषोमया ॥

इति कुम्भं जलेन आपूर्य—— (ऋ. १०. ७५. ५)

७. स हि रत्नानि दाशुषे सुवाति सविता भगः ।
तं भागं चित्रमीमहे ॥ (ऋ. ५. ८२. ३)

इति कुम्भरत्नं निक्षिप्य—

८. शरासः कुशरासः दर्भासः सैर्या उत ।
मौञ्जा अदृष्टा वैरिणाः सर्वे साकं न्यलिप्सत ॥
[ऋ. १. १९१. ३]

९. कूर्चाग्रैः राक्षसान् घोरान् छिन्धि कर्मविधातिनः ।
त्वामर्पयामि कुम्भेऽस्मिन् साफल्यं कुरु कर्मणि ॥

इति कूर्चं कुम्भे निधाय—

१०. प्र वो यज्ञेषु देवयन्तो अर्चन्
द्यावा नमोभिः पृथिवी इषध्यै ।
येषां ब्रह्माण्यसमानि विप्राः
विष्वग्वियन्ति वनिनो न शाखाः ॥ [ऋ.७.४३.१]

११. वृक्षराजसमुद्भूताः शाखायाः पल्लवत्वचः ।
युष्मान् कुम्भे स्वर्पयामि सर्वपापापनुत्तये ॥

इति आम्रपल्लवं निधाय—

१२. याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ [१०.९७.१५]

१३. नालिकेरसमुद्भूत त्रिनेत्र हरसंमत ।
शिखया दुरितं सर्वं पापं पीडां च मे नुद ॥

इति नालिकेरं निधाय—
तत्त्वा यामि इत्यनेन वरुणमावाहयेत् ॥

**குறிப்பு:—**

1. **ஸ்யோநா** என்பது பூமியையும், 2. **யேந தோகாய** என்பது தான்யத்தையும், 3, 4, 5, **ஆ கலசேஷு**, **தந்தும்**, **த்ருவதி** என இம் மூன்று கும்பத்தையும், 6 **இமம் மே** என்பது கங்கை முதலான நதிகளையும் பிரார்த்திப்பன.

7. **ஸ ஹி ரத்நாநி** என்பது கும்பத்தில் ரத்னம் இடுவதற்கும், 8-9 **சராஸ:**, **கூர்ச்ச** என்ற இவ்விரண்டும் கூர்ச்சத்தை கும்பத்தில் வைக்கவும், 10-11 **ப்ர வோ வ்ருக்ஷராஜ** இவை மாவிலை வைக்கவும், 12, 13 **யா: பலினீ:**, **நாளிகேர** இவை தேங்காய் வைக்கவும், உபயோகப்படும் மந்த்ரங்கள்.

## 10. விச்சின்ன அக்னி ஸந்தானம்

விவாஹ ஸமயத்தில் எந்த அக்னியில் ஹோமம் செய்து விவாஹம் செய்து கொள்ளப்படுகிறதோ அந்த அக்னிக்கு **க்ருஹ்யாக்னி** எனப் பெயர். கிருஹஸ்தன், பிரதிதினம் காலையில் ஸௌர்யன் ப்ராஜாபதி என்ற இரண்டு தேவதைகளையும், ஸாயங்காலம், அக்னி ப்ரஜாபதி என்ற இரண்டு தேவதைகளையும் உத்தேசித்து நெல்லினாலோ அரிசியினாலோ ஹோமம் செய்ய வேண்டும். இதனை **ஔபாஸனம்** என்பர். இதை அவன் ஆயுட்காலம் முழுவதும் செய்து வரவேண்டும்.

போதாயனர் "ஔபாஸனம் செய்வது மனைவிக்கு ஒரு நலனை—சிறப்பை-தருவதற்காக" என்று கூறுகிறார். எனவே மனைவிக்கு ஔபாஸனத்தில் ஸமமான உரிமை இருக்கிறது என்பது புலனாகும். இது காரணமாகவே மனைவியில்லாதவர்கள் ஔபாஸனத்தைச் செய்ய வேண்டியதில்லை என ஆச்வலாயனிகள் கருதுகின்றனர்.

இந்த அக்னி அணையாமல் இருக்க வேண்டும். அணைந்து போனால் அதற்கு ஒரு பிராயச்சித்த ஹோமம் செய்து மறுபடியும் ஏற்படுத்திக் கொள்ளவேண்டும்.

ஏதாவது ஒரு காரணத்தினல் பன்னிரண்டு நாட்கள் ஔபாஸனம் செய்யாதுபோனல் அக்னி அணையாமல் இருந்தாலும் அது தனது தூய்மையை இழந்து ஹோமம் செய்யத் தகுதியற்றதாகி விடுகிறது. இந்த நிலையில் அந்த அக்னியை விச்சின்னம் (கிருஹஸ்தனோடு தொடர்பற்றது) என்பர்.

ஆனல் இப்படி விச்சின்னமான அக்னியுடன் கிருஹஸ்தன் மறுபடியும் தொடர்பை ஏற்படுத்திக் கொள்வதற்காக இரண்டு வகை ஹோமங்கள் குறிப்பிடப்பட்டுள்ளன. ஒரு வகை ஹோமத்தில் ஆஜ்யம் (நெய்) ஹோமத்ரவ்யம். இதற்கு **ஆஜ்யவிதி** என்று பெயர் மற்றொன்றில் பொரியும் நெய்யும். இதனை **லாஜவிதி** என்பர். இவ்விரண்டு வகையில் ஏதாவது ஒரு முறையைத் தம் தமது குல ஆசாரப்படி பின்பற்றிச் செய்து, அக்னியின் தொடர்பை ஏற்படுத்திக் கொண்டு **ஔபாஸனம், ச்ராத்தம்** முதலியவை செய்யவேண்டும்.

பொதுவாக கிருஹஸ்தர்களில் பெரும்பாலோர் **ஔபாஸனம்** செய்யாததால் அவர்களுக்கு அக்னியின் தொடர்பு இருப்பதில்லை. ச்ராத்தத்தில் ஹோமம் செய்ய அக்னி தேவைப்படுவதால் அந்த தினத்தில் மாத்திரம் **விச்சின்ன** அக்னி ஸந்தானம் செய்து அக்னியைப் பெறுகிறர்கள்.

பலரும் ஆஜ்யவிதியை பின்பற்றியே விச்சின்ன அக்னி ஸந்தானம் செய்வதால் அம்முறையே இங்கு முதலில் கூறப்படுகின்றது. பதப்பொருள்: விச்சின்ன-தொடர்பு நீங்கிய, **அக்னி** அக்னியோடு, **ஸந்தானம்**-இணைப்பைத் தரும் சடங்கு.

அக்னி ஸந்தானத்தில் என்ன செய்யப்படுகிறது என்பதை, அதனை நான்கு பகுதிகளாகப் பிரித்து அறிய முற்படலாம்.

**முதற் பகுதி:** அக்னி ஸந்தானம் செய்ய அனுஜ்ஞை பெறுதல் ஸங்கல்பம், ஸ்தண்டிலகல்பனம், அக்னிபிரதிஷ்டை, அக்னி ஆஹ்வானம், அக்னி நமஸ்காரம், மூர்த்தித்யானம், அன்வாதானப் பிரஸ்ஜ்ஞை, ஹோமஸங்கல்பம், அன்வாதானம், அக்னிஸம்ஸ்காரம், பாத்ரஸாதனம், ப்ரோக்ஷணீ ஸம்ஸ்காரம், பிரஹ்மவரணம், ப்ரணீதா ப்ரணயனம், ஆஜ்யஸம்ஸ்காரம், ஸ்ருக் ஸ்ருவ ஸம்மார்ஜனம், அக்னி அலங்கரணம், இத்ம ஹோமம் ஆகா(ঘா)ரஹோமம், அக்னீ ஷோமீய ஹோமம், ப்ராயச்சித்தஹோமம் என்ற இவை இதில் செய்யப்படுகின்றன.

**இரண்டாம் பகுதி:** முதலில் **த்வமக்னே** என்று தொடங்கி எட்டு ஹோமங்களும், பிறகு **அக்னயே பவமானய** என்று தொடங்கி ஐந்து ஹோமங்களும் செய்யப்படுகின்றன. இவை பதின்மூன்றும் ப்ரதான ஹோமங்கள் ஆகும். இதற்குப் பிறகு ஸ்விஷ்டக்ருத் ஹோமம் செய்யப்படுகிறது.

**மூன்றும் பகுதி:** அனுயாஜ ஹோமம், இத்ம ரஜ்ஜு ஹோமம், ஸம்ஸ்ராவ ஹோமம், கர்த்தா செய்யும் ஏழு பிராயச்சித்த ஹோமங்கள், ப்ரஹ்மா செய்யும் ஏழு பிராயச்சித்த ஹோமங்கள், ஜ்ஞாதாஜ்ஞாத தோஷ பரிஹார ஹோமங்கள், ஸ்வரவர்ண விபர்யாஸதோஷ பரிஹார ஹோமங்கள், கேசவாதி ஹோமங்கள், பூர்ணாஹுதி என்ற இவை ஒன்பதுமடங்கும்.

**நான்காம் பகுதி:**—பூர்ணபாத்ர நிநயனம், ப்ரோக்ஷணம், அக்னி ஸம்ஸ்காரம், ப்ரஹ்மோத்வாஸனம், அக்னியுபஸ்தானம் என்ற இவை இதில் செய்யப்படும்.

**ஐந்தாம் பகுதியாக** ஔபாஸனம் கருதப்படலாம்.

## १०. विच्छिन्न अग्निसन्धानविधिः

(आज्यद्रव्येण)

### १. अनुज्ञा

कर्ता - पादौ प्रक्षाल्य, द्विः आचम्य, पवित्रपाणिः दक्षिणाताम्बूलाक्षतान् गृहीत्वा—

ओम्, नमो महद्भ्यो नमो अर्भकेभ्यो

नमो युवभ्यो नम आशिनेभ्यः ।

यजाम देवान् यदि शक्नवाम

मा ज्यायसः शंसमा वृक्षि देवाः ॥ [ऋ. १. २७. १३.]

सर्वेभ्यः ब्राह्मणेभ्यः - श्रीवैष्णवेभ्यः- नमः । प्रणम्य, अक्षतैर्ब्राह्मणानभ्यर्च्य-

स्वामिनः, भवत्पादमूले मया समर्पितां इमां यत्किञ्चिदपि दक्षिणां यथोक्तदक्षिणां स्वीकृत्य अनया मम धर्मपत्न्या सह अनेककालविच्छिन्न-औपासनाग्निसन्धानं कर्तुं योग्यतासिद्धिः अस्त्विति भवन्तोऽनुगृह्णन्तु ।

तथाऽस्तु; योग्यतासिद्धिरस्तु—इति प्रतिवचनम् ॥

ताम्बूलं दक्षिणां च दद्यात् ॥

## २. सङ्कल्पः

दर्भेष्वासीनः, पवित्रेण सह दर्भान् धारयमाणः, सन्निहितपत्नीकः प्राणानायम्य—

अस्मद्गुरुभ्यो नमः । अस्मत्परमगुरुभ्यो नमः । अस्मत्सर्वगुरुभ्यो नमः ।

(१) श्रीमान्....सदा हृदि ॥ (२) गुरुभ्यः....जगतां पती ॥

(३) स्वशेष....प्रक्रमते स्वयम् ॥ (४) शुक्लांबर...विघ्नोपशान्तये ॥

(५) यस्य द्विरद...तमाश्रये ॥

इति साञ्जलिबन्धमुक्त्वा, दक्षिणोरूपरि सङ्कल्पार्थं हस्ततले संयोज्य निधाय—

हरिः ओम् तत् - अस्य श्रीभगवतः, इत्याद्युक्त्वा.....अस्यां...... शुभतिथौ...प्रीत्यर्थं अनया मम धर्मपत्न्या सह विच्छिन्न–औपासन— अग्निसधानं करिष्ये, इति संकल्प्य —

पत्न्यर्थं पुनः प्राणानायम्य—

"अद्य पूर्वोक्त-एवंगुणविशेषण-विशिष्टायामस्यां शुभतिथौ विच्छिन्नौपासनाग्नि-सन्धानार्थं आवयोः औपासनाग्निमाधास्ये ।"

इति पुनः पत्न्यर्थं संकल्पं कृत्वा, दर्भानुत्तरतो निरस्य, अपः उपस्पृश्य, सात्त्विकत्यागं कुर्यात् ॥

**ப்ரயோக விளக்கம் : 1. அனுஜ்ஞை வேண்டுதல்.**

கர்த்தா கால்களை அலம்பிக் கொண்டு இரண்டு தடவை ஆசமனம் செய்து, பவித்ர பாணியாக, தக்ஷிணை தாம்பூலம் சோபனாக்ஷதைகளைக் கையில் எடுத்துக் கொண்டவனாக நின்று கொண்டு, ஓம் என்று தொடங்கி **நம:** என்கிற வரை சொல்லி ப்ரணாமம் செய்து அக்ஷதைகளைத் தூவி ஸ்வாமிகளுக்கு மரியாதை செய்த பின், **ஸ்வாமிந:** என்று தொடங்கி **அனுக்ரஹ்ணந்து** என்கிற வரை சொல்லி அனுமதியைப் பிரார்த்திக்கவும். **ததாஸ்து** என்பது ஸ்வாமிகளின் அனுக்ரஹவாக்யம். தக்ஷிணை தாம்பூலம் தரவேண்டும்.

2. **ஸங்கல்பம் செய்து கொள்ளுதல்.**

கர்த்தா பவித்ரத்துடன் சில தர்ப்பங்களை கையில் தரித்துக் கொண்டு பத்னி ஸமீபத்தில் இருக்க, ப்ராணாயாமம் செய்து **அஸ்மத் குருப்யோ நம:** என்று தொடங்கி.. **கரிஷ்யே** என்ற வரை சொல்லி, பத்னிக்காக மறுபடியும் ப்ராணாயாமம் செய்து, **அத்ய பூர்வோக்த** என்று தொடங்கி **ஆதாஸ்யே** என்கிற வரை சொல்லி, ஸங்கல்பம் செய்து கையில் வைத்திருந்த தர்ப்பத்தை வடக்கில் போட்டு ஜலத்தைத் தொட்டபின் ஸாத்விக த்யாகம் செய்ய வேண்டும்.

குறிப்பு: 1. சிலர் அக்னி ஸந்தானத்திற்கு அங்கமாக, புண்யாஹ வாசனம் செய்வர் ச்ராத்த தினத்தில் பதார்த்தங்களின் சுத்திக்காக புண்யாஹ வாசனம் முன்பே செய்திருக்கலாமாதலால் மறுபடியும் செய்வது தேவையில்லை என்பர்.

2. சிலர் பத்னிக்காக மறுபடியும் ப்ராணாயாமம் செய்வதில்லை. ஸங்கல்பவாக்யமான **அத்யபூர்வோக்த** என்று தொடங்கி **அக்னி மாதாஸ்யே** என்பதுவரை யுள்ளதை பத்னியையே சொல்லச்செய்ய லாம் என்பதும் சிஷ்டர்கள் அபிப்ராயம். அனுஷ்டானம் அப்படி காணப்படவில்லை.

## ३. स्थण्डिलकल्पनम् - अग्निप्रतिष्ठादि च

इषुमात्रावरं स्थण्डिलं प्रदक्षिणं गोमयेनोपलिप्य, यज्ञियकाष्टशकलमूलेन स्थण्डिले षट् रेखाः उल्लिख्य (उदगायतां पश्चात्—प्रागायते द्वे, नाना अन्तयोः, तिस्रो मध्ये असंसृष्टाः प्रागायताः) शकलं स्थण्डिले निधाय, स्थण्डिलमभ्युक्ष्य, शकलं प्राङ्निरस्य, अपः उपस्पृश्य, भूर्भुवस्स्वरोम् इति रेखासु अग्निं प्रतिष्ठाप्य—

अग्न्याहरणपात्रं अक्षतोदकैः अरिक्तं कुर्यात् ।

एह्यग्ने इत्यस्य मन्त्रस्य रहूगणपुत्रः गोतमः ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता । अग्न्याह्वाने विनियोगः ।

एह्यग्ने इह होता नि षीद अदब्धः सु पुरएता भवा नः ।

अवतां त्वा रोदसी विश्वमिन्वे यजा महे सौमनसाय देवान् ॥

अग्निमावाहयामि ॥ [ऋ. १. ७६. २.]

जुष्टो दमूना इत्यस्य आत्रेयः वसुश्रुतः ऋषिः । त्रिष्टुप् छन्दः । अग्निर्देवता । अग्निनमस्कारे विनियोगः ।

जुष्टो दमूना अतिथिर्दुरोणे इमं नो यज्ञमुप याहि विद्वान् ।

विश्वाः अग्ने अभियुजो विहत्या शत्रूयतां आ भरा भोजनानि ॥

[ऋ. ५. ४. ५.]

अग्नये नमः इति अञ्जलिं कुर्यात् ।

चत्वारि शृङ्गा इत्यस्य वामदेवः ऋषिः । त्रिष्टुप् छन्दः । जातवेदाः अग्निर्देवता । अग्निमूर्तिध्याने विनियोगः ॥

चत्वारि शृङ्गा त्रयो अस्य पादाः द्वे शीर्षे सप्त हस्तासो अस्य ।

त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश ॥

[ऋ. ४. ५८. ३.]

सप्तहस्तश्चतुश्शृङ्गः सप्तजिह्वो द्विशीर्षकः ।
त्रिपात् प्रसन्नवदनः सुखासीनश्शुचिस्मितः ॥ १ ॥
स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा ।
बिभ्रद्दक्षिणहस्तैश्च शक्तिमन्नं स्रुचं स्रुवम् ॥ २ ॥
तोमरं व्यजनं वामैः घृतपात्रं तु धारयन् ।
मेषारूढं जटाबद्धं गौरवर्णं महौजसम् ॥ ३ ॥
धूमध्वजं लोहिताक्षं सप्तार्चिं सर्वकामदम् ।
आत्माभिमुखमासीनं एवं ध्यायेत् हुताशनम् ॥ ४ ॥

अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥

[ऋ. १. १२.६.]

प्राङ्मुख देव अग्ने मम अभिमुखो भव । (सुप्रसन्नो भव, वरदो भव) अग्नये नमः, सकलाराधनैः स्वर्चितम् इति अक्षतान् तीर्थं च अग्निमूले विसृजेत् ॥

**ப்ரயோக விளக்கம்:** 3. **அக்னிப்ரதிஷ்டை செய்ய (ஸ்தண்டிலத்தை) தரையைச் சித்தம் செய்தலும் அக்னிப் பிரதிஷ்டை செய்தல் முதலியனவும்**

நாற்புறமும் ஒருபாணத்தின் நீளத்திற்கு குறையாத அளவுடைய தரையைப் பிரதக்ஷிணமாக கோமய ஜலத்தினுல் துடைத்து யாகார்ஹமான ஸமித்தின் அடிப்பகுதியால் தரையில் ஆறு கோடுகளைக் கிழிக்க வேண்டும். மேற்புறத்தில் வடக்கு நோக்கி ஒரு கோட்டை இழுக்க வேண்டும். (இதன் நீளம் 21 விரற்கடை) இக்கோட்டின் இரு கோடிகளிலிருந்தும் கிழக்கு நோக்கி ஒவ்வொரு கோடு (இதன் நீளம் 12 விரற்கடை) கிழிக்க வேண்டும். இக்கோடுகள் முதலில் கிழித்த கோட்டின் முனைகளைத் தொடக் கூடாது. இவ்விரண்டிற்கும் இடையில் மூன்று கோடுகள் போட வேண்டும். இவைகளும் முதற் கோட்டைத் தொடக் கூடாது.

படத்தைப் பார்க்கவும்.




எண்கள், கோடுகள்போடும் க்ரமத்தை குறிக்கின்றன.
அம்புக்குறி, கோடு முடியவேண்டிய இடத்தை குறிக்கின்றது.

கோடிழுக்க உபயோகித்தக் குச்சியைத் தரையில் வைத்துத் தரையைப் ப்ரோக்ஷித்துக் குச்சியைக் கிழக்கில் (அல்லது தென் கிழக்கில்) எறிந்து விட்டுக் கர்த்தா தீர்த்தத்தைத் தொடவேண்டும்.

சௌனகர் கோடிடுவதற்கு உபயோகித்த குச்சியைக் கிழக்கில் போடச் சொல்கிறார்.

निधाय शकलं तस्मिन्नभ्युक्ष्य स्थण्डिलं जलैः ।
निरस्य शकलं प्राच्यां पाणी प्रक्षाल्य वारिणा ॥

[शौनकीयम् १. १. ३१.]

பத்னி அக்னியை ஒரு பாத்திரத்தில் கொண்டுவந்து தரையில் வைக்க, அதைக் கர்த்தா எடுத்து ஸ்தண்டிலத்தில் கோட்டிற்குள் இருக்கும்படி, **பூர் புவஸ் ஸ்வ: ஓம்** என்று சொல்லி வைக்க வேண்டும். பிறகு அக்னி கொண்டு வந்த பாத்திரத்தில் அக்ஷதையுடன் ஜலம் சேர்க்கவேண்டும். பிறகு **ஏஹ்யக்னே** என்ற ரிக்கைச் சொல்லி அக்னியை ஆஹ்வானம் செய்ய வேண்டும். இரண்டு கைகளை இணைத்து உள்ளங்கை மேல் நோக்கியிருக்கும் படி வைத்து 'வரவேண்டும்' என்று அழைப்பது போல் வைத்துக் கொள்வது ஆவாஹன முத்ரையாகும். இதை அக்னிக்குக் காண்பிக்க வேண்டும். அல்லது அக்னிக்கு அருகில் அக்ஷதையும் சேர்க்கலாம்.

अञ्जलिं करयुग्मेन विधायेषद्विकासयेत् ॥
मुद्रैषावाहनकरी दृष्ट्वैतां देवतागणः ।
सन्निधिं याति विप्रेन्द्र तस्मादेतां प्रदर्शयेत् ॥

[विश्वामित्रसंहिता. १३. ४१-४२]

இங்கு முதலில் அக்னிப்ரதிஷ்டையும் (அக்னியை வைத்தலும்) பிறகு அக்னி ஆஹ்வானமும் (ஆவாஹனமும்) செய்யும்படி சொல்லப்பட்டு இருக்கிறது. இந்த க்ரமத்தை மாற்றி முதலில் **ஏஹ்யக்னே** என, அக்னி கொண்டு வரப்படும்போது அதனை அழைத்து, கையில் எடுத்து, **பூர்புவஸ்ஸ்வரோம்** என தரையில் வைத்து, **அக்னிநாக்னி:** என்ற ரிக்கைச் சொல்லவேண்டும் என்று, லகு ஆச்வலாயன ஸ்மிருதி கூறுகின்றது. இம்முறையும் பெரியோர்களின் அனுஷ்டானத்தில் உள்ளதுதான்.

तथा चानलमानयेत् ॥
एहीत्यग्निं समादाय स्थापयेत् भूर्भुवःस्वरोम् ।
अग्निनाग्निः ततो जुष्टः ॥ [लघु-अश्वलायनस्मृतिः २. ६-७.]

**ஜுஷ்டோ தமூநா** என்று தொடங்கி **நம:** என்ற வரை சொல்லி நமஸ்காரம் (அஞ்சலி) செய்க.

**சத்வாரி** என்று தொடங்கி **ஸ்வர்ச்சிதம்** என்கிற வரை சொல்லி அக்னியின் வடிவத்தை த்யானித்து அக்ஷதை தீர்த்தம் இரண்டையும் உபசாரமாக அக்னிக்கு அருகில் விடவும்.

குறிப்பு:- **ஸப்தஹஸ்த:** என்று தொடங்கும் நான்கு சுலோகங்களையும் **அக்னிநாக்னி:** என்ற ரிக்கையும் சிலர் சொல்வதில்லை.

## ४. अन्वाधानं होमार्थसङ्कल्पश्च

समिद्द्वयमादाय—तदङ्गं अन्वाधानं करिष्ये ।

अत्र (अस्मिन् कर्मणि) देवतापरिग्रहार्थं अस्मिन् अन्वाहितेऽग्नौ—

१. अग्निं जातवेदसं इध्मेन—

२. प्रजापतिं प्रजापतिं च आघारदेवते आज्येन—

३. अग्नीषोमौ चक्षुषी आज्येन—

४. त्वमग्ने सप्रथा असि इत्यष्टभिर्मन्त्रैः अग्न्यादीः अष्टौ प्रधानदेवताः चतुर्गृहीतेन आज्येन—

५. अग्नये पवमानाय....इति पञ्चभिः मन्त्रैः अग्निपवमानादीः पञ्च देवताः सकृद्गृहीतेन आज्येन—

६. आज्यशेषेण सकृद्गृहीतेन स्विष्टकृतम्—

७. इध्मसन्नहनेन रुद्रम्—

८. विश्वान् देवान् संस्रावेण—

९. अयसमग्निं, देवान्, विष्णुं, अग्निं, वायुं, सूर्यं, प्रजापतिं च एताः प्रायश्चित्तदेवताः सकृद्गृहीतेन आज्येन—

१०. ज्ञाताज्ञातदोषनिर्हरणार्थं अनाज्ञातत्रयं च आज्येन—

११. स्वराक्षरपदलोपादि-सर्वविपर्यासप्रायश्चित्तार्थं यद्वो देवा इति मन्त्रेण मरुतः देवान् आज्येन—

एवं साङ्गेन कर्मणा सद्यो यक्ष्ये ।

अङ्गदेवताः प्रधानदेवताः प्रायश्चित्तदेवताः सर्वाः सन्निहिताः सन्तु ।

स्वाहा—प्रजापतये इदं, न मम — (एकां समिधमाधाय)

स्वाहा—प्रजापतये इदं, न मम — (द्वितीयां समिधमधाय)

(एतदेव अन्वाधानमित्युच्यते)

**ப்ரயோகவிளக்கம்:-**

**4. அந்வாதானமும் ஹோமத்திற்கான ஸங்கல்பமும்.**

கர்த்தா இரண்டு ஸமித்துக்களைக் கையில் எடுத்துக் கொண்டு **அத்ர** என்று தொடங்கி **ப்ரஜாபதயே இதம் ந மம** என்கிற வரை சொல்லி ஒரு ஸமித்தை அக்னியில் வைக்க வேண்டும். பிறகு **ஸ்வாஹா ... ந மம** என்கிற வரை சொல்லி மற்றொரு ஸமித்தையும் அக்னியில் வைக்க வேண்டும்

குறிப்பு:-இந்த இந்த ஹோமங்களைச் செய்யப்போகிறேன் என்று சொல்லி அக்னியில் ஸமித்தை வைப்பதற்கு (அநு-ஆதானம்) அந்வாதானம் என்று பெயர். ஆதானம்-வைத்தல். கர்த்தா முதலில் தரையில் அக்னியை வைத்தார் அநு—அதற்குப் பிறகு, ஸமித்தை வைப்பதால், இதற்கு அந்வாதானம் என்ற பெயர் ஏற்பட்டது. அந்வாதானம் செய்யும் போது சில தேவதைகளைக் குறிப்பிட்டு அவர்களுக்காக ஹோமம் செய்யப்போவதைச் சொல்லுகிறார். அந்வாதானம் எல்லா ஹோமங்களின் ஆரம்பத்திலும் உண்டு. இந்த தேவதைகளின் பெயர்கள் ஒவ்வொரு ஹோமம்தோறும் வேறுபடும். அன்வாதானம் செய்வதால் குறிப்பிட்ட தேவதைகளின் பரிக்ரஹம்—ப்ராப்தி—ஸாந்நித்யம்—கர்மாவைச் செய்யும்போது ஏற்படுகிறது. கீழே தந்துள்ள சௌனகீய சுலோகங்கள் இதைத் தெளிவாக்குகின்றன.

प्रदीप्तमग्निं सम्मृज्य संप्रोक्ष्य परितो जलैः ।
आरब्धकर्माङ्गितया अन्वादध्यात् समिद्द्वयम् ॥
काष्ठत्रयं वा संकल्प्य, अमुं यक्ष्ये इति ब्रुवन् ।
अनेन यक्ष्माणायाः देवतायाः परिग्रहः ॥
अन्वाधानमिदं नाम अग्न्याधानादनन्तरम् ॥

[शौनकीयम् १.१.२३.२५]

**ஸங்கல்பத்தின் பொருள்:-**

1. ஜாத வேதஸ் என்ற அக்னிக்கு இத்மத்தினுல் ஹோமம் செய்வேன்.

2. ஆகா(घा)ர தேவதைகளான ப்ரஜாபதி, ப்ரஜாபதி இருவருக்கும் நெய்யினுல் ஹோமம்.

3. யாகத்தின் கண்களான அக்னி, ஸோமன் இருவருக்கும் நெய்யினுல் ஹோமம்.

4. **த்வமக்நே** என்ற எட்டு மந்த்ரங்களால் அக்னி முதலான எட்டு முக்ய தேவதைகளுக்கு நான்கு முறை எடுத்த நெய்யினுல் ஹோமம்.

5. **அக்னயே பவமாநாய** என்ற ஐந்து மந்த்ரங்களால் அக்னி-பவமானன் முதலான ஐந்து தேவதைகளுக்கும் ஒருதடவை எடுத்த நெய்யினுல் ஹோமம்

6. எஞ்சியுள்ள நெய்யினுல் **ஸ்விஷ்டக்ருத்** தேவனுக்கு ஹோமம்.

7. இத்மம் கட்டின கயிற்ருல் ருத்ரனுக்கு ஹோமம்.

8. விச்வேதேவர்களுக்கு மிஞ்சியுள்ள நெய்யினுல் ஹோமம்.

9. அயாஸ் என்ற அக்னி, தேவர்கள், விஷ்ணு, அக்னி, வாயு, ஸூர்யன், ப்ரஜாபதி என்ற ப்ராயச்சித்த தேவதைகளுக்கு நெய்யினுல் ஹோமம்.

10. தெரிந்தவையும், தெரியாதவையுமான குற்றங்களை நீக்குவதற்காக **அநாஜ்ஞாதம்** முதலான மூன்று மந்த்ரங்களாலே அக்னிக்கு நெய்யினுல் ஹோமம்.

11. ஸ்வரம், அக்ஷரம், பதம் முதலியவை இல்லாமை, இவற்றின் மாறுபாடு முதலான எல்லா விதமான குற்றங்களுக்கான ப்ராயச்சித்தத்திற்காக **யத் வோ தேவா:** என்ற மந்த்ரத்தினுல் தேவர்கள்—மருத்துக்கள் இவர்களுக்கு நெய்யினுல் ஹோமம் செய்தல்—என்று இவ்வாறு அங்கங்களுடன் கூடிய கர்மாவினுல் இங்கு குறிப்பிட்ட தேவர்களுக்கு இப்பொழுது யாகம் (ஹோமம்) செய்வேன் என்பது இதன் பொருள்.

அங்க தேவதைகள், முக்ய தேவதைகள், பிராயச்சித்த தேவதைகளாகிய எல்லா தேவதைகளும் இங்கு வந்து அமர வேண்டும் என்றும் கர்த்தா பிரார்த்திக்கிருர்.

## ५. (१) अग्निसंस्कारः

अथ सोदकेन पाणिना ऐशानीं दिशमारभ्य अग्निं त्रिः प्रदक्षिणं तूष्णीं परिसमुह्य—

प्राच्यादि प्रदक्षिणम् - उदक्संस्थं परिस्तीर्य,—पुरस्तात्, दक्षिणतः, पश्चात् , उत्तरतः; दक्षिणान् दर्भानुत्तरान्, उत्तरान् दर्भान् अधरान् कृत्वा—

दक्षिणतः ब्रह्मासनार्थं कांश्चिद्दर्भान्, उत्तरतः प्रणीतासादनार्थं, तदुत्तरतः पात्राणां सादनार्थं च कांश्चिद्दर्भानास्तीर्य, तूष्णीं अग्निं त्रिः पर्युक्ष्य-

## ५. (२) पात्रसादनं प्रोक्षणीसंस्कारः पात्रप्रोक्षणं च

प्रणीतापात्रदर्भाणां उत्तरतः आस्तीर्णेषु दर्भेषु प्रोक्षणपात्रं स्रुवस्रुचौ, चमसं (प्रणीतापात्रम्) आज्यस्थालीं, पञ्चदशसंख्याकमिध्मं बर्हींषि चादाय द्वन्द्वं न्यञ्चि सादयित्वा, (दक्षिणमिध्मं उत्तरं बर्हिः)—

प्रोक्षणपात्रं उत्तानं कृत्वा, पुरतो निधाय, प्रादेशमात्रं द्विदर्भपवित्र-मन्तर्धाय, अक्षतान् अवकीर्य, अप आसिच्य, पवित्राभ्यां तूष्णीं त्रिः प्राक् उत्पूय, पात्राणि उत्तानानि कृत्वा, इध्मबन्धनं विस्रस्य, पात्राणि त्रिः प्रोक्षति ॥

**ப்ரயோக விளக்கம்:**

5 (I) **அக்னிக்குச் செய்ய வேண்டிய சில கார்யங்கள்.** பிறகு கர்த்தா கையில் தீர்த்தத்தைத் தொட்டு ஈரக்கையுடன் அக்னிக்கு வடகிழக்குத் திசை தொடங்கி ப்ரதக்ஷிணமாக அக்னியைச் சுற்றிலும் மூன்று முறை துடைத்து, (இதற்கு பரிஸமூஹனம் என்று பெயர்)—

கிழக்கில் தொடங்கி பிரதக்ஷிணமாக வடக்கில் முடியும்படி பரிஸ்தரணம் செய்து (நான்கு பக்கத்திலும் பதினாறு பதினாறு தர்ப்பங்களை வைத்தல்), தென்புறத்திலுள்ள தர்ப்பத்தை கிழக்கிலும் மேற்கிலும் வைக்கப்பட்டுள்ள தர்ப்பங்களுக்கு மேல் இருக்கும் படியும், வடக்கிலுள்ளவற்றை அவைகளுக்குக் கீழ் இருக்கும்படியும் வைத்து—

அக்னிக்குத் தெற்கில் ப்ரஹ்மா உட்காருவதற்காக நான்கு தர்ப்பங்களையும் (28 தர்ப்பங்கள் போடவேண்டும் என்பது ஸ்ம்ருதி),

அக்னிக்கு வடக்கில் **ப்ரணீதா** பாத்ரம் வைக்க நான்கு தர்ப்பங்களையும், அதற்கும் வடக்கில் மற்ற உபகரணங்களை வைக்க நான்கு தர்ப்பங்களையும் கிழக்கு நுனியுடையனவாகப் பரப்பிய பின், மந்த்ரமேதும் சொல்லாமல் அக்னியைச் சுற்றிலும் மூன்று தடவை ஜலத்தைச் சுற்றவேண்டும்—(இதற்கு பர்யுக்ஷணம் என்று பெயர்)—

**குறிப்பு** :– பரிஸ்தரணத்தில் ஒவ்வொரு பக்கத்திலும் பதினாறு தர்ப்பங்கள் வைக்கப்படவேண்டும். குறைந்த பக்ஷமாக நான்காவது இருக்கவேண்டும். பரிஸ்தரண தர்ப்பம் எல்லாம் கிழக்கு நோக்கி இருக்கவேண்டும். அது சாத்யமில்லை. எனவே கிழக்கிலும், மேற்கிலும் வடக்கு நுனியாகவும், தெற்கிலும், வடக்கிலும் கிழக்கு நுனியாகவும் வைக்கப்படவேண்டும்.

**तूष्णीं पर्युक्षणम्** [आ गृ. सू. १.३ १] என்று ஸூத்ரமிருப்பதால் பர்யுக்ஷணத்திற்கு மந்த்ரம் எதுவும் இல்லை. ஆனால் ஒவ்வொரு தடவை சுற்றும் போதும் தனித்தனியே ஜலம் எடுத்துக் கொள்ள வேண்டும். பர்யுக்ஷணம் என்பதும் பரிஷேசனம் என்பதும் ஒன்று தான். "पर्युक्षणं - परितः उदकसेकः । परिसमूहनम् - सोदकेन पाणिना परितो मार्जनम्" हरदत्तः । (आश्व. गृ. सू १. ३. १.)

பரிஸமூஹனம் பர்யுக்ஷணம் இரண்டையும் செய்யும் போது மந்த்ரமில்லாவிடில் ஏதோ குறையிருப்பது போல் எண்ணம் உண்டாகிறது. அதனால் சிலர், ஓம் ஓம் என்று சொல்லி பரிஸமூஹனத்தையும், ஓம்பூர்புவஸ்ஸ்வ: என்று சொல்லி பர்யுக்ஷணத்தையும் செய்கின்றனர்.

**ப்ரயோக விளக்கம்**

**5 (2). பாத்ரங்களை (ஹோம உபகரணங்களை) வைத்தல்— ஜலத்திற்கு ஸம்ஸ்காரம்–பாத்ரங்களை ப்ரோக்ஷித்தல்.**

ப்ரணீதா பாத்ரத்திற்கான தர்ப்பங்களுக்கு வடக்கில் போட்டுள்ள தர்ப்பத்தின் மேல் ப்ரோக்ஷண பாத்ரம் ஸ்ருக்ஸ்ருவம், ப்ரணீதா பாத்ரம் நெய்ப்பாத்திரம், பதினைந்து ஸமித்துக்களைக் கொண்ட பலாசங்குச்சிக்கட்டு ஒன்று, தர்ப்பக்கட்டு ஒன்று என இவைகளை இரண்டு இரண்டாகச் சேர்த்து, இரண்டு கைகளாலும், கவிழ்த்து வைக்கக் கூடியவைகளைக் கவிழ்த்து வைத்து, இத்மத்தைத் தெற்கிலும், தர்ப்பத்தை வடக்கிலும் வைக்கவேண்டும்.

பாத்ரம் வைக்கும் முறை—

| | | |
|---|---|---|
| **ஸ்ருக் ஸ்ருவம்** | **ஆஜ்யபாத்ரம்** | **பர்ஹிஸ்** |
| **ப்ரோக்ஷணபாத்ரம்** | **ப்ரணீதாபாத்ரம்** | **இத்மம்** |

பிறகு ப்ரோக்ஷண பாத்ரத்தை எடுத்துக் கர்த்தா தன்முன்னால் வைத்துக்கொள்ள வேண்டும்.

பிறகு ஒட்டைச்சாண் நீளமுள்ள முனை முறியாத, **முடிச்சுப் போடாத** இரண்டு தர்ப்பங்களை ப்ரோக்ஷண பாத்ரத்தில் வைத்து அக்ஷதை சேர்த்து, ஜலத்தை விட்டு, பாத்ரத்திலுள்ள தர்ப்பங்களை ஒன்றுடன் ஒன்று சேராமல் கட்டைவிரல், மோதிரவிரல் இவைகளால் மேல் நோக்கிய இரு கைகளால் இரு முனைகளிலும் தர்ப்பத்தின் முனை வடக்கு நோக்கியிருக்கும்படி பிடித்துக் கொண்டு, மந்த்ரமின்றி, கிழக்கு நோக்கி மூன்று முறை **உத்பவனம்** செய்து—

முன்பு தர்ப்பத்தின் மேல் வைத்த பாத்ரங்களை நிமிர்த்தி வைத்து, இத்மம் கட்டிய கயிற்றையும் அவிழ்த்து, எல்லாவற்றையும் பவித்ரத்தினால் ஜலத்தை எடுத்து மூன்று முறை ப்ரோக்ஷிக்கவும்.

**குறிப்பு:** (2) **ப்ரோக்ஷண பாத்ரம்.** ப்ரோக்ஷிப்பதற்கான ஜலம் வைக்கும் பாத்ரம்,

(2) **ஸ்ருக்**—ஹோமம் செய்வதற்கான மரக்கரண்டி; முழம் நீளம் உள்ளது. (3) **ஸ்ருவம்**—நெய் எடுப்பதற்கான அதே நீளமுள்ள சிறிய குழிவுடைய கரண்டி. இவை யாகங்களில் உபயோகிக்கப்படுபவை. வீட்டில் செய்யும் கர்மாக்களுக்கு இவை சிறிய அளவில் இருக்கலாம். இவற்றிற்குப் பதிலாக பலாச இலைகளை உபயோகிக்கலாம் என்பர் **சௌனகர்.**

तद्भावे पलाशस्य पर्णाभ्यां हूयते हविः । [शौनकीयम् १.१.५९]
तद्भावे - स्रुक्स्रुवयोरभावे ॥

பலாச இலைக் காம்பில் மூன்று இலைகள் இருக்கும். அவற்றில் நடு இலையைத்தான் எடுத்துக் கொள்ளவேண்டும். இவற்றில் பெரிய இலையை, ஸ்ருக் என்றும், சிறியதை ஸ்ருவம் என்றும் கொள்வர். இரண்டையும் சேர்த்து ஒரு பாத்ரமாகக் கணக்கிடுவர். கீழே தந்துள்ள இரண்டு சுலோகங்களும் வைக்க வேண்டிய பாத்ரங்களைக் குறிப்பிடுகின்றன.

प्रोक्षणीं स्रुक्स्रुवौ चैव चमसं चाज्यभाजनम् ।
इध्माबर्हिरिदं प्रोक्तं आज्यहोमेष्वनुक्रमात् ॥ १ ॥

प्रोक्षणपात्रमथ स्रुवयुक्तं पात्रमपां प्रणयेन विशिष्टम् ।
भाजनमाज्यहविर्ग्रहणार्थं त्विध्ममथो परिसादय दर्भान् ॥ २ ॥

இந்த முறை, நெய்யை ஹவிஸ்ஸாக உள்ள ஹோமத்தைப் பற்றியது.

அன்ன ஹோம விஷயத்தில் வைக்க வேண்டிய பாத்ரங்களைக் கீழ் வரும் சுலோகம் தருகின்றது.

स्थालीं चरोः प्रोक्षणभाजनं च दर्वीस्रुवौ सादय दर्विहोमे ।
पात्रं प्रणीतार्थमथाज्यपात्रम् इध्मं क्रमेण क्रमवित् कुशांश्च ॥ ३ ॥
[नारायणव्याख्या आश्व. गृ. १.३.३.]

**சமஸ:**—பூர்ண பாத்ரம்; இதில் பூர்ணமாக ஜலம் வைத்து கர்மா முடிந்தவுடன் கர்த்தா ப்ரோக்ஷித்துக் கொள்ள வேண்டும். யாகத்தில் அவப்ருத ஸ்நாநம் இருப்பது போல் க்ருஹ்ய கார்யங்களில் இது உள்ளது. ப்ரணீதாபாத்ரம், வருணபாத்ரம் என்றும் இதற்குப் பெயர்.

(4) **ஆஜ்யஸ்தாலி;** நெய்யை வைத்துக் கொள்வதற்கான தொன்னை.

(5) **இத்மம்;** பதினைந்து பலாசங்குச்சிகளைக் கொண்ட கட்டு. இதில்பதினைந்து, இத்மஹோமம் என்ற பெயரில் ஹோமம் செய்யப்படும். ஒரு ஸமித்து அனுயாஜம் என்பதற்காகத் தனியாக இத்துடன் வைக்க வேண்டும்.

(6) **பர்ஹிஸ்;** தேவையான அளவு தர்ப்பத்தையும் எடுத்துக் கட்டி வைக்கவேண்டும். ப்ரோக்ஷண பாத்ரத்தைக் கர்த்தா தன் எதிரில் வைக்கும்போது, வடக்கு நோக்கி இருக்கும்படி இரண்டு தர்ப்பங்களைப் போட்டு அதன் மேல் வைக்க வேண்டும்.

**பவித்ரம்:**—இந்தப் பதத்திற்கு தர்ப்பம் என்ற அர்த்தம் உண்டு. ரிக்வேதிகள் இந்த பவித்ரத்தில் முடிச்சைப் போடக்கூடாது.

**ப்ராதேசம்:**—பவித்ரத்தின் நீளம் இதனால் சொல்லப்படுகிறது. கட்டை விரலையும், ஆள்காட்டி விரலையும் ஒன்றிற் கொன்று எதிர்ப்புறமாக இருக்கும்படி நீட்டினால் இவைகளுக்கு இடையில் எவ்வளவு தூரம் இருக்குமோ அந்த அளவிற்கு **ப்ராதேசம்** என்று பெயர். ஒட்டைச்சாண் என்பர்.

**உத்பூய**—தூயதாகச் செய்து என்பது இதன் பொருள். **உத்பவனம்** என்பது இச்செயலைக் குறிக்கும். இரண்டு தர்ப்பத்தால்,

பாத்ரத்தில் உள்ள ஜலத்தை பாத்ரத்தின் மேற்குப் பகுதியிலிருந்து கிழக்கு நோக்கி மெதுவாக நகர்த்துதல். மூன்று முறை இதனைச்செய்யும் போதும் தர்ப்பம் மேற்கிலிருந்து கிழக்குநோக்கித் தான்போகவேண்டும். கிழக்கிலிருந்து மேற்குநோக்கிவரக்கூடாது. [யஜுர்வேதிகள் இவ்வாறு செய்கிறார்கள்] நெய்யிற்கு உத்பவனமும் (சுத்தம் செய்தலும்) இதே போல் செய்யப்படவேண்டும்.

(8) ஸம்ஸ்காரம்:—ஒரு பொருளுக்கு சிறப்பை—உயர்வை—தருவதற்காக செய்யப்படும் கார்யம். இங்கு ப்ரோக்ஷணத்தை ஸம்ஸ்காரம் என்ற சொல் குறித்தது.

பாத்ர ஸாதனத்தை மஹர்ஷி ஆச்வலாயனர் சொல்லவில்லை. வேறு ஸூத்ரகாரர்கள் சொல்லியிருப்பதனால் கர்த்தா விரும்பினால் இதைச் செய்யலாம் என்று வ்யாக்யாதா நாராயணர் சொல்லுகிறார். அவர் வாக்யம்: शास्त्रान्तरदृष्टानां अविरोधिनां पात्रसादनादीनां इच्छातःक्रिया । (आश्व. गृ. सूत्रम् १.३.३)

## ५. (३) अथ ब्रह्मवरणम्, ब्रह्मणः कार्याणि च

"ओम्, अस्मिन् विच्छिन्नाग्निसन्धानकर्मणि ब्रह्माणं त्वां वृणे" इति ब्राह्मणं प्रार्थ्य—

"वृतोऽस्मि करिष्ये" इति प्रतिवचने दत्ते—

ओम्, ब्रह्मणे नमः, इदमासनम्-इति दर्भान् दद्यात् । अथ ब्रह्मा समस्तपाण्यङ्गुष्ठो भूत्वा अग्रेणाग्निं परीत्य दक्षिणतः आस्तीर्णेषु दर्भेषु एकं तृणं अङ्गुष्ठोपकनिष्ठिकाभ्यां गृहीत्वा—

**निरस्तः परावसुः**— [आश्व. श्रौ. सूत्रमन्त्रः. १. ३. ३०]

इति तृणं नैरृत्यां निरस्य, अप उपस्पृश्य—

**इदमहं अर्वावसोः सदने सीदामि**— [आश्व. श्रौ. सू.१.३.३०]

इति उदङ्मुखः दक्षिणतः उपविश्य—

**बृहस्पतिर्ब्रह्मा ब्रह्मसदने आशि(सि)ष्यते । बृहस्पते यज्ञं गोपाय**— [आश्व. श्रौ. सू. १.१२.९.]

इति ब्रह्मा जपेत् ।

ब्रह्मणे नमः सकलाराधनैः स्वर्चितम्—

**ப்ரயோக விளக்கம்:**

5 (3) **ப்ரஹ்மவரணம், ப்ரஹ்மாவின் கார்யம்**

**ஓம்.. த்வாம்வ்ருணே** என்று சொல்லி ஒரு ப்ராஹ்மணரை ப்ரஹ்மாவாக வரிக்க, அவர், **வ்ருதோஸ்மி கரிஷ்யே** என்று பதில் சொல்லியபிறகு, தமது இரு உள்ளங்கைகளையும் சேர்த்து கட்டை விரல்கள் ஒன்றையொன்று பற்றும்படி வைத்துக் கொண்டு, அக்னிக்குமுன்னுள்ள இடத்திலுல் தெற்கு நோக்கி வந்து, அக்னிக்குத் தெற்கில் அவருக்காக முன்பே போடப்பட்டுள்ள தர்ப் பத்திலிருந்து ஒன்றை வலதுகைக் கட்டைவிரல் மோதிர விரல் இரண்டாலும் எடுத்து **நிரஸ்த: பராவஸு:** என்று சொல்லி தென் மேற்கில் எறிந்துவிட்டு, ஜலத்தைத் தொட்டபின், **இதம்...ஸீதாமி** என்று தர்ப்பத்தின் மேல் வடக்கு நோக்கி உட்கார்ந்து, **ப்ருஹஸ்பதி ...கோபாய** என்ற மந்திரத்தை ஒரு முறை சொல்ல வேண்டும்.

**குறிப்பு:**—இந்தக் கர்மாவில் கர்த்தாவிற்கு உதவி செய்யும் ப்ராஹ்மணர், ப்ரஹ்மா என்றழைக்கப்படுகிறுர். இவருக்கு ஐந்து கார்யங்கள் உண்டு. அவையாவன—

(1) **निरसनम्**-தர்ப்பத்தை எடுத்துமந்த்ரம் சொல்லிப்போடுதல். (2) **उपवेशनम्**-ஆஸநத்தில் அமர்தல், (3) **जप:** - ஜபமந்திரத்தைக் கூறுதல். (4) **प्रायश्चित्तहोमकरणम्**- ப்ராயச்சித்தஹோமம் செய்தல். (5) **संस्थाजप:**-ஸம்ஸ்தா ஜபம் செய்தல் என்பனவாம். **யஜ்ஞம் கோபாய** என்பதற்குப்பின் **ஸ மாம் பாஹி** என்று ஒரு வாக்யத்தைச் சிலர் கூறுகின்றனர். ஸூத்ரகாரர் இங்கு தராத இதைச் சொல்ல வேண்டியதில்லை.

## ५. (४) प्रणीताप्रणयनम्

अथ प्रणीतापात्रं पुरतो निधाय, पवित्रे अन्तर्धाय, अद्भिरापूर्य, गन्धादि प्रक्षिप्य, "अत्र वरुणं गङ्गादिनदीश्च आवाहयामि" इति आवाह्य गन्धादिभिरभ्यर्च्य, ब्रह्माणमर्चयित्वा, सपवित्रकराभ्यां पूर्णपात्रमुद्धृत्य—

**ओम् ब्रह्मन्, अपः प्रणेष्यामि** [आश्व. श्रौ. सू. १. १२. १२]

इति कर्ता कथयेत्—

ओं भूर्भुवस्स्वः । बृहस्पतिप्रसूतः इति जपित्वा—
ओम् प्रणय— [आश्व. श्रौ. सू. १. १२. १२]

इति प्रतिवचनं ब्रह्मण:—

ततः कर्ता पूर्णपात्रं आत्मनो घ्राणान्तं नीत्वा अग्नेरुत्तरतः एतदर्थं परिस्तीर्णेषु दर्भेषु निधाय, "वरुणाय नमः, सकलाराधनैः स्वर्चितम्" इत्यक्षतान् प्रक्षिप्य अन्यैः दर्भैः पिधाय—

**ப்ரயோக விளக்கம்**

5 (4) **ப்ரணீதா ப்ரணயநம்**

**கர்த்தா** பிறகு **ப்ரணீதா** பாத்ரத்தைத் தனக்கு எதிரில் **வைத்து** ப்ரோக்ஷண பாத்திரத்தில் இருந்த பவித்ரத்தை அதில் வைத்து ஜலம் நிரப்பி சந்தனம் முதலியன சேர்த்து, **அத்ர..ஆவாஹயாமி** என வருணனையும், கங்கை முதலான புண்ய நதிகளையும் ஆவாஹனம் செய்து அக்ஷதைகளால் அர்ச்சித்த பிறகு, ப்ரஹ்மாவை அர்ச்சித்த பின், பூர்ண பாத்ரத்தில் இருக்கும் பவித்ரத்தைப் பிடித்துக் கொண்டிருக்கும் இருகைகளாலும் பூர்ண பாத்ரத்தைக் கையில் எடுத்து, **ஓம் ப்ரஹ்மன் அப: ப்ரணேஷ்யாமி** என்று ப்ரஹ்மாவிடம் சொல்ல, பிரஹ்மா ஓம்... **ப்ரஸூத:** என்று ஜபம் செய்த பின், **ஓம் ப்ரணய** என்று உரத்துச்சொல்லவேண்டும். பிறகு கர்த்தா பூர்ண பாத்ரத்தை தனது நாஸிகை அளவிற்கு மேலே உயர்த்தி அக்னிக்கு வடக்கில் இதற்காக போடப்பட்டுள்ள தர்ப்பத்தின் மேல் வைத்து, **வருணாய நம:... ஸ்வர்ச்சிதம்** என்று அக்ஷதை சேர்த்து, தர்ப்பங்களால் மூடவேண்டும்.

**குறிப்பு** :—பூர்ண பாத்ர ஜலத்திற்கு உத்பவனம் சிலர் செய்கின்றனர். ஏற்கனவே உத்பூதமான ஜலத்தை மூன்றுமுறை இதில் சேர்க்க வேண்டும் என்று சொல்வதற்கு ஆதாரம் இல்லை. ஆனால் சிலர் இதையும் செய்கிறார்கள்.

ரிக்வேதிகளுக்கு பூர்ண பாத்ரம் அவசியம் இருக்கவேண்டும். ஆச்வலாயன மஹர்ஷி இதை ஒரு குறிப்பினால் காட்டியிருக்கிறார். ப்ருஹஸ்பதிப்ரஸூத: என்று தான் பாடம் உள்ளது. ப்ருஹஸ்பதி: என்று இல்லை.

## ५. (५) अथ आज्यसंस्कारः

पूर्णपात्रे स्थिते ते पवित्रे आज्यपात्रे निधाय, आज्यं आसिच्य, बर्हिः परिस्तरणात् उपवेषेण अङ्गारान् उदक् अपोह्य, तेष्वाज्य-मधिश्रित्य, ज्वलता दर्भेण अवद्योत्य, द्वे दर्भाग्रे अङ्गुष्ठपर्वमात्रे प्रच्छिद्य, प्रोक्ष्य, आज्ये प्रास्य, ज्वलता तेनैव उल्मुकेन आज्यं त्रिः पर्यग्नि कृत्वा, उल्मुकं निरस्य, अपः उपस्पृश्य, आज्यं कर्षन्निव (मन्दम) उदगुद्वास्य, अङ्गारान् प्रत्युह्य, उत्तानाभ्यां पाणिभ्यां अङ्गुष्ठोपकनिष्ठिकाभ्यां उदगग्रे ते एव पवित्रे धृत्वा—

'**सवितुष्ट्वा** इत्यस्य हिरण्यस्तूपः ऋषिः। पुरउष्णिक् छन्दः। सविता देवता। आज्योत्पवने विनियोगः ॥

**सवितुष्ट्वा प्रसव उत्पुनामि अच्छिद्रेण पवित्रेण।**

**वसोस्सूर्यस्य रश्मिभिः ॥** [आश्व. गृह्यसूत्रमन्त्रः १. ३. ३]

इति प्राक् सकृन्मन्त्रेण, द्विस्तूष्णीं च उत्पूय, ते पवित्रे प्रोक्ष्य, अग्नौ प्रागग्रं प्रहृत्य, अप उपस्पृश्य, आत्मनः अग्रे बर्हिस्सन्नहनं विस्रस्य तान् दर्भान् उदगग्रान् आस्तीर्य, तत्र आज्यमासादयेत् ॥

**ப்ரயோக விளக்கம்**

### 5 (5) ஆஜ்ய ஸம்ஸ்காரம்

ஆஜ்ய (நெய்) பாத்ரத்தை எடுத்துத் தனக்கு முன் வைத்து பூர்ண பாத்திரத்திலிருக்கும் பவித்ரத்தை எடுத்து அதில் வைத்து நெய்யை ஆஜ்ய பாத்திரத்தில் விட்டு, அக்னியிலிருந்து தணலை உபவேஷத்தினுல் பரிஸ்தரணத்திற்கு வெளியில் எடுத்து வைத்து, அதன் மேல் நெய்ப் பாத்திரத்தை வைத்து—

ஒரு தர்ப்பத்தை எடுத்து அக்னியில் வைத்து, அது எரியும் போது எடுத்து நெய்யின் ஸமீபத்தில் கொண்டு சென்று, அந்த தர்ப்ப ஜ்வாலையால் பிரகாசப்படுத்தி, கட்டைவிரல் கணு அளவுள்ள இரண்டு நுனி தர்ப்பத் துண்டுகளை வெட்டி அலம்பி ப்ரோக்ஷித்து,

நெய்யில் வைத்து, முன்பு எடுத்த தர்ப்பத்தை மறுபடியும் கொளுத்தி அது எரியும் போது, அதைக் கொண்டு நெய்யிற்குச் சுற்றிலும் மூன்று தடவை சுற்றி, அதை அக்னியில் சேர்த்து ஜலத்தைத் தொட்டபின்—

நெய்ப்பாத்திரத்தைத் தரையிலிருந்து தூக்காமல் தரையில் படும்படி மெதுவாக இழுத்து, சிறிது வடக்கில் கொண்டு போய் வைத்து—

தணலை மறுபடியும் அக்னியில் சேர்த்து நெய்யிலிருந்த பவித்ரத்தை இரண்டு கைகளாலும் எடுத்துக் கட்டைவிரல், மோதிர விரல் இவைகளால் பிடித்துக் கொண்டு ஸவிதுஷ்ட்வா என்று தொடங்கி ரச்மிபி: என்கிற வரை உள்ள மந்திரத்தைச் சொல்லி, ஒரு முறை கிழக்கு நோக்கி உத்பவனம் செய்து, மந்த்ரம் சொல்லாமல், மறுபடியும் இரண்டு முறை உத்பவனம் செய்து—

அந்த பவித்ரத்தைத் தரையில் வைத்துப் ப்ரோக்ஷித்து கிழக்கு நுனியாக இருக்கும்படி அக்னியில் போட்டபின் ஜலத்தைத் தொட்டு—

அக்னிக்கு வடக்கில் இத்மத்திற்கு அருகில் வைத்திருந்த தர்ப்பத்தைக் கட்டியிருந்த தர்ப்பக் கயிற்றை எடுத்து பிரித்து அக்னிக்கு மேற்புறத்தில் வடக்கு நுனியாக இருக்கும்படி போட்டு அதன்மேல் நெய்ப்பாத்திரத்தை வைத்து விடவேண்டும்.

குறிப்பு:—இந்த ஆஜ்ய ஸம்ஸ்காரம் அவசியம் செய்யப்பட வேண்டும். ஸூத்ரகாரர் இதைச் சொல்லியிருக்கிறார்.

அவத்யோதனம் செய்ய தர்ப்பத்தை ஔபாஸன அக்னியிலோ, தனியாக எடுத்து நெய் உருக்க வைத்த அக்னியிலோ கொளுத்தியிருந்தால் அந்த தர்ப்பத்தை ஹோமாக்னியுடன் சேர்த்து விட வேண்டும். பரிஸ்தரணத்திற்கு வெளியில் போடக்கூடாது. வேறு சாதாரண அக்னியில் கொளுத்தியிருந்தால் வடக்கில் அல்லது வடமேற்கில் போடலாம் என்று, ஆபஸ்தம்பக்ருஹ்யத்திற்கு உரை எழுதிய ஸுதர்சன ஸூரி கூறுகிறார். அவர் வாக்யம்—

आज्यसंस्कारकाणां अङ्गाराणां प्रत्यूहनविधानात् "अपवृत्ते कर्मणि" (आप. परि. ४-२७) इति न लौकिकत्वम् । अवद्योतन - पर्यग्निकरणाग्न्योस्तु यदा आयतनस्थात् उपादानं तदा तयोः अग्न्योः अपवृत्तकर्मत्वेन लौकिकत्वात् त्यागः । यदा तु निरूढात् तदा तस्मिन्नेव क्षेपः ॥

निरूढः - पृथक्कृतः अग्निः ॥ [आप. गृ सू. १-२२]

உபவேஷம்:—தணலைத் தள்ளுவதற்கான ஒரு நீளமான குச்சி.

## ५. (६) अथ स्रुक्-स्रुवयोस्संस्कारः (सम्मार्जनम्)

## (आपस्तम्बोक्तविधिः)

स्रुक्स्रुवौ आदाय, "अग्नौ प्रतितप्य, दर्भैस्संमृज्य, पुनः प्रतितप्य, प्रोक्ष्य, निधाय, दर्भानद्भिः संस्पृश्य (प्रोक्ष्य) अग्नौ प्रहरति" (प्रहरेत्) ॥ [आप. गृ. सू. १.२.१]

### अन्यः प्रकारः

दक्षिणहस्तेन स्रुक्स्रुवौ गृहीत्वा, सव्येन कांश्चिद्दर्भानादाय, सहैवाग्नौ प्रताप्य, स्रुचं (जुहूं) निधाय, स्रुवं सव्येन गृहीत्वा, दक्षिणेन दर्भानादाय,स्रुवस्य बिलं दर्भाग्रैः प्रागारभ्य प्रादक्षिण्यं प्रागपवर्गं त्रिःपरिमृज्य-

तैरेव दर्भैः बिलपृष्ठं (बिलस्य अधोभागं) अभ्यात्मं त्रिः संमृज्य-

ततो दर्भाणां मूलैः दण्डस्य अधस्तात् बिलपृष्ठादारभ्य उपरिष्टात् बिलंयावत् दण्डं अधः उपरि च त्रिः सम्मृज्य, स्रुवं प्रोक्ष्य, प्रताप्य, उदगाग्ज्यात् बर्हिषि आसादयेत् । आज्यस्य स्थाल्यां वा निदध्यात् ।

अथ उदकस्पृष्टैः तैरेव दर्भैः स्रुचं (जुहूं) च एवमेव संस्कृत्य, स्रुवात् उदङ्निधाय, दर्भान् प्रोक्ष्य, अग्नौ प्रहरेत् ॥

**ப்ரயோக விளக்கம்**

### 5 (6) ஸ்ருக் ஸ்ருவம் இரண்டின் ஸம்ஸ்காரம் (ஆபஸ்தம்பர் கூறிய முறை)

ஸ்ருக், ஸ்ருவம் இரண்டையும் (இவை பலாச இலைகள்) அக்னியில் இலையின் மேல் புறத்தைக் காய்ச்சி, தர்ப்பத்தினல் இரு புறத்தையும் துடைத்து, மறுபடியும் அக்னியில் காய்ச்சி ஜலத்தினல் ப்ரோக்ஷித்து—ஸ்ருவத்தை ஆஜ்ய பாத்திரத்தில் வைத்து ஸ்ருக்கை அதனருகில் வைத்து விட்டு, துடைப்பதற்காக எடுத்த தர்ப்பங்களை ஜலத்தினல் ப்ரோக்ஷித்து அக்னியில் சேர்க்கவும்.

குறிப்பு :—மரத்தினல் செய்த ஸ்ருக், ஸ்ருவங்களை க்ருஹ்ய கார்யங்களில் உபயோகிக்க முடிவதில்லை. அதற்குப் பதிலாக

பலாச இலைகளை உபயோகிப்பதால் மேலே சொன்னபடி அவை களுக்கு ஸம்ஸ்காரம் செய்வது ஸுலபம் என்பதால் இந்த முறை இங்கு சொல்லப்பட்டிருக்கிறது. இது அனுஷ்டானத்தில் உள்ளது ஸ்ருக், ஸ்ருவ ஸம்மார்ஜனத்தை ஆச்வலாயனர் சொல்லவில்லை. வேறு ஸூத்ரகாரர்கள் தான் சொல்லியிருக்கிறார்கள். எனவே பலாச இலைகளுக்கு இங்கு கூறியுள்ளபடி ஸுலபமாக ஸம்ஸ்காரம் செய்து கொண்டால் போதும். இது ஆபஸ்தம்பர் சொன்ன முறை.

स्रुक्स्रुवसंमार्जनं अन्यशास्त्रेषु दृष्टम् । तस्यापीच्छातः क्रिया—

[नारायणव्याख्या, आ. गृ.सू १.३.३]

### மற்றொரு வகையான ஸ்ருக் ஸ்ருவ ஸம்ஸ்காரம்

மரத்திலானவையும் ஒரு முழம் நீளம் காம்பு உடையவையு மான இரு கரண்டிகளுக்குச் செய்ய வேண்டிய ஸம்ஸ்காரம் இங்கு சொல்லப்படுகிறது. இங்கு சொல்லப்படுவதைப் பலாச இலை களுக்கும் செய்கிறார்கள்.

1. வலது கையில் ஸ்ருக். ஸ்ருவம் இரண்டையும் சேர்த்துப் பிடித்து, இடது கையில் நான்கு தர்ப்பங்களையும் எடுத்துக் கொண்டு, இரண்டையும் சேர்த்து அக்னியில் காய்ச்சி, ஸ்ருக்கைக் கீழே வைத்து விட்டு, வலது கையிலுள்ள ஸ்ருவத்தை இடது கையில் வாங்கிக் கொண்டு. இடது கையிலுள்ள தர்ப்பத்தை வலது கையில் எடுத்து, முதலில் ஸ்ருவக் கரண்டியில் குழிந்த பகுதியை, தர்ப்பத்தின் நுனிகளால், கிழக்கிலே தொடங்கி, பிர தக்ஷிணமாகக் கிழக்கிலே முடியும்படி மும்முறை (மந்திரம் எதுவும் இல்லை) துடைத்து—முதற் படம் பார்க்க—

2. பிறகு அக்கரண்டியின் குழிந்த பகுதியின் கீழ்ப்புறத்தை (அடிப்பாகத்தை) அதே தர்ப்பங்களின் முனைப்பகுதியால் கர்த்தாவை நோக்கிக் கை வரும்படி கிழக்கில் தொடங்கி மூன்று முறை துடைத்து— இரண்டாம் படம் பார்க்க.—

3. பிறகு தர்ப்பங்களின் அடிப்பகுதிகளால் காம்பின் அடிப் பகுதியை-கரண்டிக்குழியின் அடிப்பாகத்தில் தொடங்கி கரண்டி யின் மேல் பகுதியிலுள்ள குழிவு வரை-மும்முறை துடைத்து— மூன்றும் படம் பார்க்க—

ஸ்ருவத்தைப் ப்ரோக்ஷித்து அக்னியில் காய்ச்சி நெய்க்கு வடக்கில் வைக்க வேண்டும். நெய்ப்பாத்திரத்தின் மேலும் வைக்கலாம்.

அதற்கு அங்கமாக வேத வாக்யங்களை மாத்ரம் கூற வேண்டுமே ஒழிய, **சிக்ஷை வ்யாகரணம்** முதலான விடப்பட வேண்டாத சாஸ்த்ர வாக்யங்களையும், விட வேண்டிய வேதவாக்யங்களுடன் கூறுவது பொருத்தமுடையதாகப் படவில்லை. **ப்ரயோகபாரிஜாதம்** (பக்கம் 269) மார்க்கண்டேயஸ்ம்ருதி இவைகள் அங்க வாக்யங்களை கூறும்படி கொடுத்திருக்கின்றன. ஸூத்ரகாரரான ஆச்வலாயனர் அங்க வாக்யங்களைக் கூறும்படி விதிக்கவில்லை. விரும்பியிருந்தால் ப்ரஹ்மயஜ்ஞத்தில் கூறியதைப் போல் இங்கும் சில நூல்களை அவர் ப்ரஸ்தாபித்திருக்கலாம். அவர் விதிக்காததால் அங்க நூல்களின் வாக்யங்களைக் கூருமலிருப்பதே நல்லது.

ஆனல் அங்கங்களைச் சேர்த்ததற்கு ஒரு ஸமாதானம் கூறலாம். வேத அத்யயனத்தை நிறுத்திய பின் **வித்யார்த்தி** எதையும் படிக்காமல் இருக்கப் போவதில்லை. சில ஸ்ம்ருதிகள் கூறியது போல் அங்க நூல்களின் அத்யயனத்தை அவன் **உடனே** தொடங்க வேண்டும் என்பதற்கு அடையாளமாக அங்க வாக்யங்களான **அத சிக்ஷாம்** முதலியவை கூறப் படுவதாகக் கருதலாம்.

**ப்ரயோக விளக்கம்**

## 7. ஹோமசேஷ ஸமாபனம்

**ஸ்விஷ்டக்ருத்திற்குப்** பிறகு செய்ய வேண்டிய **அனுயாஜம்** முதலான ஹோமங்களைச் செய்து **ப்ரணீதாநிநயனம் ப்ரோக்ஷணம் ப்ரஹ்மோத்வாஸனம்** இவற்றைச் செய்து **அக்னி உபஸ்தானம்** செய்ய வேண்டும். பக்கங்கள் 151, 152, 153, 154 – இவற்றில் கொடுக்கப் பட்ட **ஔபாஸனம்** செய்யப்பட வேண்டாம்.

## 8. அவப்ருதஸ்நாநம்

**ப்ரயோக விளக்கம்:**

### 8. 1. லகுஸங்கல்பம்

ப்ராணாயாமம் செய்து **அத்யபூர்வோக்த......ப்ரீத்யர்த்தம் அத்யாய...அவப்ருத ஸ்நாநம் கரிஷ்யே** என சிறிய ஸங்கல்பம் செய்து கொண்டு **ஸ்ரீ வைஷ்ணவர்கள்** ஸ்நாநம் செய்வர். சுத்த வஸ்த்ரம் புண்ட்ரம் தரித்து மாத்யாஹ்னிகம் செய்ய வேண்டும்.

### 8, 2 மஹா ஸங்கல்பம்

**ஸ்மார்த்தர்கள்** பவித்ரம் தரித்து ப்ராணாயாமம் செய்து **சுக்லாம்பர** ... என்று தொடங்கி **கரிஷ்யே** (பக்கம் 300) வரை

சொல்லி ஸ்நாநம் செய்வர் பின் உலர்ந்த வஸ்த்ரம் புண்ட்ரம் முதலியவை தரித்து மாத்யாஹ்னிகம் செய்வர்.

**குறிப்பு:**—இந்த ஸ்நாநத்தை ஆச்வலாயனர் ஸூத்ரம் 3-5-20 என்பதில் **அப: அப்யவயந்தி** என விதித்திருக்கிறார். முடியாதவர்கள் **ப்ரோக்ஷணம்** செய்து கொள்ளலாம்,

### 9. உத்ஸர்ஜனாங்க தர்ப்பணம்

**ப்ரயோக விளக்கம்**

ப்ராணாயாமம் செய்து, **ப்ரீத்யர்த்தம் ஸாவித்ர்யாதி...தேவாதீநாம் ச தர்ப்பணம் கரிஷ்யே** என்று ஸங்கல்பம் செய்து, அக்ஷதை கலந்த ஜலத்தால் **ஸாவித்ர்யாதி** ஒன்பது தேவதைகளுக்கும். **அக்னி** முதலான இருபது தேவதைகளுக்கும் **ப்ரஹ்மா த்ருப்யது** என்று தொடங்கும் தேவதைகளுக்கும் **சதர்ச்சின: த்ருப்யந்து** என்று தொடங்கும் மஹர்ஷிகளுக்கும் தர்ப்பணம் செய்ய வேண்டும். **ஸுமந்து** முதலானவர்களுக்கு எள் கலந்த அக்ஷதை ஜலத்தினாலும், பித்ருக்களுக்கு எள் ஜலத்தாலும் தர்ப்பணம்.

குறிப்பு: **அக்னிம் தர்ப்பயாமி** என்று தொடங்கியுள்ளதில் பன்னிரண்டாவது தர்ப்பணத்தை வர்மாணம் **தர்ப்பயாமி** என்றும், **விச்வான் தேவான் தர்ப்பயாமி** என்றும் சிலர் சொல்லிச் செய்வர்.

இரண்டாவது தர்ப்பணத்தில் **அப்த்ருணஸூர்யான்** என்று மந்த்ரம் சொல்லப்படவேண்டும். ஸூர்யம் என்று அல்ல. **அக்னிம் தர்ப்பயாமி** என்று தொடங்கும் தர்ப்பணத்தை **அக்னி மீளே** முதலான ரிக்குகளைச் சொல்லிச் செய்ய வேண்டும் என்பது **ஐயந்தர்** கருத்து. உபாகர்மாவின் தொடக்கத்தில் **கௌதமர்** முதலான மஹர்ஷிகளை ஆவாஹனம் செய்து பூஜிப்பர் சிலர். ஆனால் இது மஹர்ஷியால் விதிக்கப்படவில்லை. முடிவிலும் புண்யாஹ வாசனம் செய்ய வேண்டும் என்பது சிலர் கருத்து.

**உத்ஸர்ஜனத்தில் செய்யப்படும் கர்மாக்கள்:**

**1. அனுஜ்ஞை, 2. ஸங்கல்பம்**, புண்யாஹவாசனம், **3. அக்னி முகாந்தம், 4. ஸாவித்ர்யாதி ஹோமம்**, **5. அக்ன்யாதிஹோமம், 6. வேதாரம்பம், 7. ஹோம சேஷ ஸமாபனம், 8. ஸ்நாநம். 9. தர்ப்பணம்.**

**அத்யாய-உத்ஸர்ஜன க்ரமம் முற்றும்.**

# १७. अथ अध्यायोपाकर्मक्रमः

## प्रथमो भागः

### १. सङ्कल्पः

**आचार्यः** शिष्यैः सह नदीतीरं गत्वा कृतमाध्याह्निकक्रियः, आचम्य,दर्भेष्वासीनःदर्भान् धारयमाणः पवित्रपाणिः प्राणानायम्य, शुक्लाम्बर.... श्रीगोविन्देत्यादि.... उक्त्वा.... प्रीत्यर्थं एतेषां गृहस्थानां ब्रह्मचारिणाम् मम च अध्येष्यमाणानां छन्दसां सवीर्यत्वाय श्रावण्यां श्रवणनक्षत्रे अध्यायोपाकरणकर्म करिष्ये इति सङ्कल्प्य - सात्त्विकत्यागं कृत्वा, उपाकर्माङ्गपुण्याहवाचनं कृत्वा, पुण्याहजलेन होमद्रव्याणि प्रोक्षेत् । सावित्र्यादयः प्रीयन्तामिति पुण्याहे विशेषः ॥

**प्रथमोपाकृतिश्चेत्** नान्दीमुखपूर्वं कुर्यात्। "अध्यायोपकर्माङ्गं अभ्युदयश्राद्धं हिरण्यरूपेणाद्य करिष्ये" इति सङ्कल्प्य, पुण्याहवाचनं अभ्युदयश्राद्धं च कुर्यात् ।

### २. अग्निप्रतिष्ठादीनि

**यज्ञियशकलेन** उल्लिख्य षड्रेखाः, शकलं स्थण्डिले निधाय स्थलं प्रोक्ष्य शकलं प्राङ्निरस्य अप उपस्पृश्य, ओम् भूर्भुवः स्वः- इति रेखास्वग्निं प्रतिष्ठाप्य - **एह्यग्ने** रहूगणपुत्रः गोतमः अग्निस्त्रिष्टुप् । अग्न्याह्वाने विनियोगः । **एह्यग्ने** इह होता नि षीद अदब्धः सु पुरएता भवा नः। अवतां त्वा रोदसी विश्वमिन्वे यजा महे सौमनसाय देवान् ॥ अग्निमावाहयामि । **जुष्टो दमूना** आत्रेयः वसुश्रुतः अग्निस्त्रिष्टुप् अग्निनमस्कारे विनियोगः

**जुष्टो दमूना** अतिथिर्दुरेणे इमं नो यज्ञमुप याहि विद्वान् । विश्वाः **अग्ने** अभियुजो विहत्या शत्रूयतां आ भरा भोजनानि । अग्नये नमः (अञ्जलिं कृत्वा) **चत्वारि शृङ्गा** वामदेवः जातवेदाः अग्निस्त्रिष्टुप् । अग्निमूर्तिध्याने विनियोगः ।

**चत्वारि शृङ्गा** त्रयो अस्य पादाः द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश॥

**सप्तहस्तः** चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः । त्रिपात् प्रसन्नवदनः सुखासीनः शुचिस्स्मितः ॥ स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां तथा । बिभ्रद् दक्षिणहस्तैश्च शक्तिमन्नं स्रुचं स्रुवम् ॥ तोमरं व्यजनं वामैः घृतपात्रं तु धारयन् ॥

**मेषारूढं** जटाबद्धं गौरवर्णं महौजसम् । धूमध्वजं लोहिताक्षं सप्तार्चिं सर्वकामदम् । आत्माभिमुखमासीनमेवं ध्यायेद्धुताशनम् ॥

**अग्निनाग्निः**समिध्यते कविर्गृहपतिर्युवा । हव्यवाड्जुह्वास्यः प्राङ्मुख देवाग्ने ममाभिमुखो भव । अग्नये नमः । सकलाराधनैः स्वर्चितम् ॥ (अक्षतान् क्षिपेत्)

## ३. अन्वाधानम्

**समिद्द्वय**मादाय, तदङ्गमन्वाधानं करिष्ये । अत्र (अस्मिन्नुपाकर्महोमकर्मणि) देवतापरिग्रहार्थम् - अग्निं जातवेदसमिध्मेन, प्रजापतिं प्रजापतिं चाधारदेवते आज्येन, अग्नीषोमौ चक्षुषी आज्येन–

सावित्र्यादिनवप्रधानदेवताः आज्येन, अग्न्यादिविंशति-मण्डलदेवताः दधिसक्तुद्रव्येण,परमात्मानं यज्ञोपवीतेन, दधिसक्तु-शेषेणाग्निं स्विष्टकृतम्—

इध्मसन्नहनेन रुद्रम्, विश्वान् देवान् संस्रावेण, अयसमग्निं देवान् विष्णुमग्निं वायुं सूर्यं प्रजापतिं चैताः प्रायश्चित्तदेवता आज्यद्रव्येण, समस्तविपर्यास परिहरणार्थं देवान् मरुतः आज्येन, एवं सांगेन कर्मणा सद्यो यक्ष्ये । अंगदेवताः प्रधान-देवताः प्रायश्चित्तदेवताः सर्वाः सन्निहिताः सन्तु । स्वाहा-प्रजापतय इदम्– (एकां समिधमाधाय) स्वाहा-प्रजापतय इदम् – (अपरां समिधमाधाय) ॥

## ४. अग्निसंस्कारादीनि

१. **सोदकेन** पाणिना अग्निं त्रिः - प्रदक्षिणं परिसमुह्य परिस्तीर्य, पात्रसादनार्थं अग्नेः उत्तरतः, ब्रह्मासनार्थं दक्षिणतश्च कांश्चन दर्भानास्तीर्य – परिस्तरणदर्भान् दक्षिणानुत्तरान् उत्त-रान् अधरांश्च कृत्वा, ओं भूर्भुवः स्वः इति अग्निं त्रिः परिषिच्य-

**चरुस्थालीं** प्रोक्षणीपात्रं स्रुक्स्रुवौ प्रणीतापात्रं आज्यपात्रं इध्मं बर्हिश्च द्वन्द्वं न्यक् च सादयेत् ॥

२. **प्रोक्षणीपात्र**मादाय तत्रैवोत्तानं निधाय प्रादेशमात्रौ दर्भौ पवित्रे कृत्वा पात्रान्तर्निधाय, अक्षतैः सह अपः आसिच्य पवित्राभ्यां त्रिः उत्पूय, पात्राणि उत्तानानि कृत्वा, इध्माबर्हिषोः सन्नहने विस्रस्य सर्वाणि पात्राणि त्रिः प्रोक्षति ।

३. "**अस्मिन्** उपाकर्माख्यकर्मणि ब्रह्माणं त्वां वृणे"।"वृतोऽस्मि करिष्ये" इति प्रतिवचनम्। अग्रेणाग्निं परीत्य दक्षिणतः आस्तीर्णेषु दर्भेषु एकं आदाय, "निरस्तः परावसुः"इति नैर्ऋत्यां निरस्य, अप उपस्पृश्य, "इदमहमर्वावसोः सदने सीदामि" इति उदङ्मुखः उपविश्य—"बृहस्पतिः ब्रह्मा ब्रह्मसदने आसिष्यते। बृहस्पते यज्ञं गोपाय" इति ब्रह्मा जपेत् ॥

४. **प्रणीतापात्रं** अग्नेः प्रत्यङ् निधाय पूर्वपवित्रे उदगग्रे अन्तर्निधाय अक्षतैः सह उदकं पूरयित्वा (उत्पूतवारिणा त्रिः संपूर्य इति केचित्) त्रिः प्रागुत्पूय - गन्धादि प्रक्षिप्य—

५. "**ब्रह्मन्** अपः प्रणेष्यामि" इति ब्रह्माणमामन्त्र्य - "ओम् भूर्भुवः स्वः। बृहस्पतिप्रसूतः। ओं प्रणय" इति उत्तरं ब्रह्मणो लब्ध्वा, कर्ता - प्रणीतापात्रं घ्राणान्तं उद्धृत्य उत्तरतोऽग्नेः दर्भेषु निधाय, वरुणाय नमः। सकलाराधनैः स्वर्चितम् इति अक्षतान् प्रक्षिप्य दर्भैः प्रच्छाद्य- ते पवित्रे दधिसक्तुपात्रे निधाय दधिमिश्रसक्तुभिः पूरयित्वा सक्तून् गायत्र्या प्रोक्ष्य निधाय —

६. **आज्यपात्रे** ते पवित्रे निधाय, आज्यमासिच्य, अंगारान् बर्हिः परिस्तरणात् उदीच्यां निरुह्य तेषु अधिश्रित्य, ज्वलता दर्भेणावद्योत्य अङ्गुष्ठपर्वमात्रे द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाळ्य प्रत्यस्य, तेनैव ज्वलता उल्मुकेन आज्यं दधिसक्तूंश्च त्रिः पर्यग्नि कृत्वा, उल्मुकं निरस्य, अप उपस्पृश्य, आज्यं कर्षन्निवोदगुद्वास्य, अङ्गारान् प्रत्यूह्य—

सवितुष्ट्वा हिरण्यस्तूपः । सविता - पुरउष्णिक् । आज्योत्पवने विनियोगः - **सवितुष्ट्वा** प्रसव उत्पुनामि अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः ॥

इति अंगुष्ठोपकनिष्ठिकाभ्यां उत्तानाभ्यां पाणिभ्यां प्रागुत्पुनाति, सकृन्मन्त्रेण, द्विः तूष्णीम् । पवित्रे भूमौ निधाय प्रोक्ष्य, प्रागग्रं अग्नौ प्रहरेत् । अपः उपस्पृशेत् । अग्नेः पश्चात् बर्हिःसन्नहनमास्तीर्य तस्यां प्रागग्रं बर्हिः आस्तीर्य तत्राज्यं निधाय—

७. **स्रुक्-स्रुवौ** आदाय अग्नौ प्रताप्य दर्भैः संमृज्य पुनः प्रताप्य प्रोक्ष्य, आज्यात् उत्तरतो निधाय, दर्भान् प्रोक्ष्य अग्नौ प्रहरेत् । स्रुवेणाज्यं आदाय दधिसक्तुमभिघार्य अग्नि-आज्ययोः मध्ये नीत्वा, आज्याद् दक्षिणतः बर्हिषि आसाद्य पुनरभिघारयेत् ।

८. **विश्वानि नः** इति तृचस्य आत्रेयः वसुश्रुतः ऋषिः । अग्निर्देवता त्रिष्टुप् छन्दः । अग्न्यलंकरणे विनियोगः ।

**विश्वानि** नः दुर्गहा जातवेदः सिन्धुं न नावा दुरिताति पर्षि । अग्ने अत्रिवन्नमसा गृणानोऽस्माकं बोध्यविता तनूनाम् ॥ **यस्त्वा** हृदा कीरिणा मन्यमानः अमर्त्यं मर्त्यो जोहवीमि । जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याम् ॥ **यस्मै त्वं** सुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् । अश्विनं स पुत्रिणं वीरवन्तं गोमन्तं रयिं नशते स्वस्ति ॥ अक्षतान् प्रदक्षिणं अग्निं परितः ऐशानीतः आरभ्य दिक्षु विदिक्षु च निधाय अग्नये, नमः । ब्रह्मणे नमः । आत्मने नमः - इति अक्षतान् विकीर्य—

९. **इध्ममादाय** इध्मबन्धनरज्जुं अनुयाजसमिधं च पूर्णपात्रे उदगग्रां निधाय इध्मं द्विरभिघार्य, इध्ममलंकृत्य, "अस्मिन् उपाकर्महोमकर्मणि ब्रह्मन् इध्ममाधास्ये" इति आमन्त्र्य [आधत्स्वेति प्रतिवचनम्]

**अयं त इध्मः** वामदेवः जातवेदाः अग्निः। त्रिष्टुप्। इध्माधाने विनियोगः। **अयं त इध्मः** आत्मा जातवेदः तेनेध्यस्व। वर्धस्व चेद्ध। वर्धय चास्मान् प्रजया पशुभिः ब्रह्मवर्चसेन अन्नाद्येन समेधय स्वाहा— [इध्मं निधाय] अग्नये जातवेदसे समिध्यमानाय इदम् न मम—

**१०. प्रजापतिं** मनसा ध्यायन् स्रुवेण तूष्णीं वायव्यादारभ्याग्नेयान्तं आघारयति। स्वाहा - प्रजापतय इदम्। नैर्ऋत्याः आरभ्य ऐशान्यन्तम्-स्वाहा-प्रजापतय इदम्-इति आज्यं आघारयति।

**अग्नये स्वाहा**, अग्नये इदं न मम [अग्नौ उत्तरभागे] सोमाय स्वाहा - सोमायेदं न मम [अग्नौ दक्षिणभागे]। **अन्वाधानप्रभृति** एतत्क्षणपर्यन्तं मध्ये सम्भावितसमस्तदोषप्रायश्चित्तार्थं सर्वप्रायश्चित्तं होष्यामि - ओम्-भूर्भुवस्स्वः स्वाहा, प्रजापतये इदम्, न मम॥

## द्वितीयो भागः

### ५. अथ प्रधानहोमाः

आचार्यः शिष्यैरन्वारब्धः **नव** आज्याहुतीः ओम्-पूर्वाः जुहोति।

१. सावित्र्यै स्वाहा सावित्र्या इदम् न मम ।
२. ब्रह्मणे स्वाहा ब्रह्मण इदम् न मम ।
३. श्रद्धायै स्वाहा श्रद्धाया इदम् न मम ।
४. मेधायै स्वाहा मेधाया इदम् न मम ।
५. प्रज्ञायै स्वाहा प्रज्ञाया इदम् न मम ।
६. धारणायै स्वाहा धारणाया इदम् न मम ।
७. सदसस्पतये स्वाहा सदसस्पतय इदम् न मम ।
८. अनुमतये स्वाहा अनुमतय इदम् न मम ।
९. छन्दोभ्यःऋषिभ्यःस्वाहाछन्दोभ्यःऋषिभ्यइदम् न मम

**६. अग्न्यादि विंशतिमण्डलदेवताभ्यः दधिसक्तुहोमाः**

अथ दर्व्यामुपस्तीर्य दधिसक्तुतः मध्यात् प्रथमं, पूर्वार्धात् द्वितीयं [चतुरवत्तिनाम्] पश्चार्धाच्च तृतीयं चावदानं [पञ्चावत्तिनां] कृत्वा स्थालीस्थं हविरभिघार्य अवत्तं चाभिघारयति । [एवं प्रतिहोमं कुर्यात्]

१. अग्निमीळे मधुच्छन्दाः अग्निः गायत्री । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः—

**अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥**

स्वाहा, अग्नय इदम् न मम [ऋ. १. १. १.]

२. दर्वीमुपस्तीर्येत्यादि— **कुसुम्भकस्तत्** अगस्त्यः अप्तृणसूर्याः देवता । अनुष्टुप् छन्दः । उपाकर्मप्रधानदधिसक्तुहोमे वनियोगः—

**कुषुम्भकस्तदब्रवीत् गिरेः प्रवर्तमानकः ।**

**वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषम् ॥**

स्वाहा-अप्तृणसूर्येभ्य इदम् न मम । [ऋ. १. १९१. १६]

३. दर्वीमुपस्तीर्येत्यादि - **त्वमग्ने** इत्यस्य **गृत्समदः** अग्निः देवता। जगतीच्छन्दः । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः—

**त्वमग्ने द्युभिः त्वमाशुशुक्षणिः त्वमद्भ्यः त्वमश्मनस्परि ।**

**त्वं वनेभ्यस्त्वमोषधीभ्यः त्वं नृणां नृपते जायसे शुचिः ॥**

स्वाहा-अग्नये इदम् न मम— [ऋ. २. १. १.]

४. दर्वीमुपस्तीर्येत्यादि – **आवदन्** गृत्समदः । शकुन्तो जगती । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः—

**आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः।**

**यदुत्पतन् वदसि कर्करिर्यथा बृहद् वदेम विदथे सुवीराः ॥**

स्वाहा- शकुन्ताय इदम् न मम । [ऋ. २.४३.३.]

५. दर्वीमुपस्तीर्यत्यादि - **सोमस्य मा** विश्वामित्रः अग्निः देवता, त्रिष्टुप् । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः—

**सोमस्य मा तवसं वक्ष्यग्ने वह्निं चकर्थ विदथे यजध्यै ।**

**देवाँ अच्छा दीद्यद् युञ्जे अद्रिं शमाये अग्ने तन्वं जुषस्व ॥**

स्वाहा- अग्नय इदम् न मम । [ऋ. ३. १. १.]

६. दर्वीमुपस्तीर्येत्यादि - **गृणाना** जमदग्निः मित्रावरुणौ देवता, गायत्री । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः–

**गृणाना जमदग्निना योनावृतस्य सीदतम् ।**

**पातं सोमं ऋतावृधा ॥** [ऋ. ३. ६२. १८.]

स्वाहा - मित्रावरुणाभ्याम् - इदम् न मम ।

७. दर्वीमुपस्तीर्येत्यादि - **त्वां ह्यग्ने** वामदेवः । अष्टिः । अग्निः । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः–

**त्वां ह्यग्ने सदमित् समन्यवो देवासो**

**देवमरतिं न्येरिर इति क्रत्वा न्येरिरे ।**

**अमर्त्यं यजत मर्त्येष्वा देवमादेवं**

**जनत प्रचेतसं विश्वमादेवं जनत प्रचेतसम् ॥**

स्वाहा - अग्नय इदम् न मम । [ऋ. ४. १. १,]

८. दर्वीमुपस्तीर्येत्यादि - **धामन्ते** वामदेवः । आपो देवता । जगती । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः–

**धामन् ते विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि ।**

**अपामनीके समिथे य आभृतः तमश्याम मधुमन्तं त ऊर्मिम् ॥**

स्वाहा - अद्भ्य इदम् न मम [ऋ. ४. ५८. ११.]

९. दर्वीमुपस्तीर्येत्यादि - **अबोध्यग्निः** बुध-गविष्ठिरौ ऋषी । अग्निःत्रिष्टुप् । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः–

**अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।**

**यह्वाइव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥**

स्वाहा - अग्नये इदम् न मम । [ऋ. ५. १. १.]

१०.दर्वीमुपस्तीर्येत्यादि-**गन्ता नो** एवयामरुत्-ऋषिः। मरुतः देवता । अतिजगती । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः–

**गन्ता नो यज्ञं यज्ञियाः सुशमि श्रोता हवमरक्षः एवयामरुत् ।**

**ज्येष्ठासो न पर्वतासो व्योमनि यूयंतस्य प्रचेतसः स्यात दुर्धर्तवो निदः ॥**

स्वाहा - मरुद्भ्यः इदम् न मम । [ऋ. ५. ८७. ९.]

११. दर्वीमुपस्तीर्येत्यादि - **त्वं ह्यग्ने** भरद्वाजः । अग्निः त्रिष्टुप् । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः–

**त्वं ह्यग्ने प्रथमो मनोताऽस्याः धियो अभवो दस्म होता ।**

**त्वं सीं वृषन् अकृणोर्दुष्टरीतु सहो विश्वस्मै सहसे सहध्यै ॥**

स्वाहा - अग्नये इदम् न मम । [ऋ. ६. १. १.]

१२. दर्वीमुपस्तीर्येत्यादि - **यो नः स्वः**, पायुर्भारद्वाजः, देवाः ब्रह्म च देवता । अनुष्टुप् छन्दः । उपाकर्मप्रधानदधिसक्तु-होमे विनियोगः–

**यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति ।**

**देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् ॥** [ ६. ७५. १९.]

स्वाहा - देवेभ्यः ब्रह्मणे च इदम् न मम ।

१३. दर्वीमुपस्तीर्येत्यादि - **अग्निं नरो** - वसिष्ठः, अग्निः-विराट् । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः–

**अग्निं नरो दीधितिभिररण्योः हस्तच्युती जनयन्त प्रशस्तम् ।**

**दूरेदृशं गृहपतिमथर्युम् ॥**

स्वाहा - अग्नये इदम् न मम । [ऋ. ७. १. १.]

१४. दर्वीमुपस्तीर्येत्यादि - **प्रति चक्ष्व**, वसिष्ठः इन्द्रासोमौ देवता, अनुष्टुप् । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः–

**प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् ।**

**रक्षोभ्यो वधमस्यतम् अशनिं यातुमद्भ्यः ॥**

स्वाहा - इन्द्रासोमाभ्यामिदम् न मम । [ऋ.७.१०४.२५]

१५. दर्वीमुपस्तीर्येत्यादि - **मा चिदन्यत्**, प्रगाथः, इन्द्रो बृहती । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः—

**मा चिदन्यद्वि शंसत सखायो मा रिषण्यत ।**

**इन्द्रमित् स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥**

स्वाहा - इन्द्रायेदं न मम। [ऋ. ८. १. १.]

१६. दर्वीमुपस्तीर्येत्यादि - **आग्ने याहि,** सोभरिरग्नि: मरुतश्च देवता। अनुष्टुप्। उपाकर्मप्रधानदधिसक्तुहोमेविनियोग:-

**आग्ने याहि मरुत्सखा रुद्रेभिः सोमपीतये।**

**सोभर्या उप सुष्टुतिं मादयस्व स्वर्णरे ॥**

स्वाहा - अग्नामरुद्भ्यः इदम् न मम। [ऋ.८.१०३.१४]

१७. दर्वीमुपस्तीर्येत्यादि - **स्वादिष्ठया** मधुच्छन्दा:, पवमानसोमो गायत्री। उपाकर्मप्रधानदधिसक्तुहोमे विनियोग:–

**स्वादिष्ठया मदिष्ठया पवस्व सोम धारया।**

**इन्द्राय पातवे सुतः ॥**

स्वाहा - पवमानसोमायेदम् न मम। [ऋ. ९. १. १.]

१८. दर्वीमुपस्तीर्येत्यादि - **यत्ते राजन्** कश्यप:, पवमानसोम: पङ्क्ति:। उपाकर्मप्रधानदधिसक्तुहोमे विनियोग:–

**यत्ते राजन् भृतं हविस्तेन सोमाभि रक्ष नः।**

**अरातीवा मा नस्तारीन्मो च नः किं चन आममत्**

**इन्द्रायेन्दो परि स्रव ॥**

स्वाहा - पवमानसोमायेदम् न मम। [ऋ.९.११४.४.]

१९. दर्वीमुपस्तीर्येत्यादि - **अग्ने बृहन्** त्रित:, अग्नि:त्रिष्टुप्। उपाकर्मप्रधानदधिसक्तुहोमे विनियोग:–

**अग्ने बृहन् उषसामूर्ध्वो अस्थात् निर्जगन्वान् तमसो ज्योतिषागात् ।**

**अग्निर्भानुना रुशता स्वङ्ग आ जातो विश्वा सद्मान्यप्राः ॥**

स्वाहा - अग्नये इदम् न मम । [ऋ. १०. १. १.]

२०. दर्वीमुपस्तीर्येत्यादि - **समानी व** - संवननः, संज्ञानम् देवता, अनुष्टुप् । उपाकर्मप्रधानदधिसक्तुहोमे विनियोगः—

**समानी व आकूतिः समाना हृदयानि वः ।**

**समानमस्तु वो मनः यथा वः सुसहासति ॥**

स्वाहा - संज्ञानायेदम् न मम । [ऋ.१०.१९१.४]

**यज्ञोपवीतहोमः**– दर्वीमुपस्तीर्य यज्ञोपवीतं तत्र निधाय अभिघार्य– **यज्ञोपवीतम्**– ब्रह्मा ऋषिः । परमात्मा त्रिष्टुप् । यज्ञोपवीतहोमे विनियोगः-

**यज्ञोपवीतं** परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । स्वाहा- विष्णवे परमात्मने इदं न मम ।

**स्विष्टकृद्धोमः**- स्विष्टकृदर्थम् दर्वीमुपस्तीर्य चतुः पञ्चकृत्वो वा अवदानधर्मेण दधिसक्तून् अवदाय-नात्र हविः प्रत्यभिघारयति-

**यदस्य कर्मणः** हिरण्यगर्भः । स्विष्टकृत् अग्निः । अतिधृतिः । स्विष्टकृद्धोमे विनियोगः–

यदस्य कर्मण: अत्यरीरिचं यद्वा न्यूनमिहाकरम् ।
अग्निष्टत् स्विष्टकृत् विद्वान् सर्वं स्विष्टं सुहुतं करोतु मे ।।

अग्नये स्विष्टकृते सुहुतहुते सर्वप्रायश्चित्ताहुतीनां कामानां समर्धयित्रे; सर्वान्नः कामान् समर्धय स्वाहा - अग्नये स्विष्टकृते इदम् न मम । [आश्व. गृ. सू. १.१०.२२]

## तृतीयो भागः

### ७. सक्तुप्राशनादीनि

#### ७. १. सक्तुप्राशनम्

**सक्तुमिव** बृहस्पति: परब्रह्मज्ञानं देवता । त्रिष्टुप् छन्दः । दधिसक्तुप्राशने विनियोग:—

**सक्तुमिव तितउना पुनन्तः यत्र धीरा मनसा वाचमक्रत ।**
**अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि ।।**

[ऋ. १०. ७१. २]

इति मन्त्रेण, आचार्य: शिष्याश्च होमस्थलादन्यत्रापसृत्य दधिसक्तून् प्राश्य आचम्य **मार्जनं** कुर्यु: ।।

परिस्तरणदर्भै: शिष्याणामञ्जलीन् अन्तर्धाय आचार्य: सहकारिणा अप: आसेचयते । (प्रोक्षति वा) तन्मार्जनम्[1] ।

---

1. स्विष्टकृतं हुत्वा दधिसक्तून् प्राश्य ततो मार्जनम् । आश्व.गृ.सू.३.५.१०.

(दधिसक्तुप्राशनात्परमेव केचित् यज्ञोपवीतहोमं कुर्वन्ति[2] ।)

## ७. २. यज्ञोपवीतधारणम्

प्राणानायम्य .... प्रीत्यर्थं श्रौतस्मार्तविहितनित्यकर्मानुष्ठानयोग्यतासिद्धर्थं ब्रह्मतेजोऽभिवृद्धयर्थं यज्ञोपवीतधारणमहं करिष्ये । **यज्ञोपवीत**मित्यस्य ब्रह्मा ऋषिः त्रिष्टुप् छन्दः । परमात्मा देवता । यज्ञोपवीतधारणे विनियोगः—

**यज्ञोपवीतं** परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः - ओमिति धारयेत् । गृहस्थास्तु सकृदाचम्य प्राणानायम्य....प्रीत्यर्थं द्वितीययज्ञोपवीतधारणं करिष्ये इति संकल्प्य, ऋषिदेवताच्छन्दःकथनपूर्वकं यज्ञोपवीतमिति मन्त्रमुक्त्वा धारयेयुः । ततः सकृदाचम्य सर्वे धृतपूर्वं यज्ञोपवीतं परित्यजेयुः ।

## ७. ३. अजिनमौञ्जीदण्डधारणम्

१. ब्रह्मचारिणः, **ऋक्सामाभ्याम्** सूर्या ऋषिका । सूर्या देवता । अनुष्टुप् छन्दः । अजिनधारणे विनियोगः—

**ऋक्सामाभ्यामभिहितौ गावौ ते सामनावितः ।**

**श्रोत्रं ते चक्रे आस्ताम् दिवि पन्थाश्चराचरः ॥**

---

2. वेदारम्भणतः पूर्वं सक्तुप्राशनतः परम् ।
नवयज्ञोपवीतानि दद्यात् वै धारयेत् ततः ॥ कार्ष्णाजिनिः
एतत् दानधारणं होमस्याप्युपलक्षणम् ।
कृत्वा यज्ञोपवीतानि नवानि वसुधाधिप ।
हुत्वाग्नौ गुरवे दत्वा पितृभ्यो धारयेत् स्वयम् ॥ गालवः ॥
प्रयोगपारिजातम्, पृ. २५०.
दद्याद्वै धारयेत् ततः इत्यस्य स्थाने 'हुत्वा दत्वा च धारयेत्' इति पाठभेदोऽपि वर्तते ।

इति मन्त्रेण **अजिनम्**— [ऋ. १०. ८५. ११.]

२. **प्रावेपाः** कवषः, अक्षाः इन्द्रो वा देवता, त्रिष्टुप् छन्दः । मौञ्जीधारणे विनियोगः—

**प्रावेपाः मा बृहतो मादयन्ति प्रवातेजाः इरिणे वर्वृतानाः ।**

**सोमस्येव मौजवतस्य भक्षो विभीदको जागृविर्मह्यमच्छान् ॥**

इति **मौञ्जीम्**— [ऋ. १०. ३४. १.]

३. **एष क्षेति** श्यावाश्वः ऋषिः । रथवीतिर्देवता। गायत्री-छन्दः । दण्डधारणे विनियोगः—

**एष क्षेति रथवीतिर्मघवा गोमतीरनु । पर्वतेष्वपश्रितः ॥**

इति दण्डं च धारयेयुः– [ऋ. ५. ६१. १९]

## चतुर्थो भागः

### ८. अथ अध्यायोपाकरणकर्माङ्गाध्ययनारम्भः

अप उपस्पृश्य, प्राणानायम्य,अद्य पूर्वोक्त .... तिथौ ... प्रीत्यर्थं (श्रावण्यां श्रवणनक्षत्रे) अध्येष्यमाणानां छन्दसां सवीर्यत्वाय अध्यायोपाकरणकर्मांगं अध्ययनारम्भं करिष्ये - इति संकल्प्य, अपः उपस्पृश्य—

अग्नेः पश्चात् प्रागग्रेषु दर्भेषूपविश्य उदपात्रे दर्भान् निधाय, ब्रह्माञ्जलिकृतः (ब्रह्माञ्जलिं कृत्वा) जपेत् ।

ओम् भूर्भुवः स्वः । तत्सवितुर्वरेण्यम् भर्गो देवस्य-धीमहि । धियो यो नः प्रचोदयात् । इति त्रिः अभ्यस्य—

## ८. १. ऋग्वेदादिः

अग्निमीळे— मधुच्छन्दाः । अग्निः । गायत्री । ओम् ॥

१. अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥

२. अग्निः पूर्वेभिः ऋषिभिः ईड्यः नूतनैरुत । स देवाँ एह वक्षति ॥

३. अग्निना रयिमश्नवत् पोषमेव दिवेदिवे । यशसं वीरवत्तमम् ॥

४. अग्ने यं यज्ञमध्वरं विश्वतः परिभूरसि । स इत् देवेषु गच्छति ॥

५. अग्निर्होता कविक्रतुः सत्यः चित्रश्रवस्तमः । देवो देवेभिः आ गमत् ॥

६. यदङ्ग दाशुषे त्वमग्ने भद्रं करिष्यसि । तवेत्तत् सत्यमङ्गिरः ॥

७. उप त्वाग्ने दिवेदिवे दोषावस्तः धिया वयम् । नमो भरन्तः एमसि ॥

८. राजन्तं अध्वराणां गोपां ऋतस्य दीदिविम् । वर्धमानं स्वे दमे ॥

९. स नः पितेव सूनवेऽग्ने सूपायनो भव । सचस्वा नः स्वस्तये ॥

## ८. २. ऋग्वेदब्राह्मणम् । आरण्यकम् च

ओम् अग्निर्वै देवानामवमः । विष्णुः परमः । ओम् । ओम् अथ महाव्रतम् ओम् । ओम् एष पन्थाः एतत्कर्म-ओम् । ओम् अथातः संहिताया उपनिषत् - ओम् । ओम् विदा मघवन् विदा । ओम् । ओम् महाव्रतस्य पञ्चविंशतिं सामिधेन्यः-ओम् ।

## ८. ३. यजुस्सामाथर्ववेदादिः

१. ओम् इषे त्वोर्जे त्वा वायवः स्थोपायवः स्थ (यजुर्वेदादिः)

**२. ओम् अग्न आ याहि वीतये। (सामवेदादिः)**

**३. ओम् शन्नो देवीरभिष्टये (अथर्ववेदादिः)**

### ८. ४. अथ वेदाङ्गानि

१. अथ शिक्षां प्रवक्ष्यामि– (शिक्षा) २. अइउण्, वृद्धिरादैच्– (व्याकरणम्) ३. धी श्री स्त्री–म्–म-य-र-स-त-ज-भ-न-ल-ग-संमितम्- (छन्दःशास्त्रम्) ४. गौः, ग्मा, ज्मा, क्ष्मा– समाम्नायः समाम्नातः– (निरुक्तम्) ५. पञ्चसंवत्सर-मयम्– (ज्यौतिषम्) ६. अथैतस्य समाम्नायस्य–(कल्पः) ॥

### ८. ५. अथ विद्यास्थानानि

१. पराशरम् मुनिवरम्। २. अथातो धर्मजिज्ञासा। ३. अथातो ब्रह्मजिज्ञासा। ४. योगीश्वरं याज्ञवल्क्यम्। ५. नारायणम् नमस्कृत्य ॥

तच्छंयोरावृणीमहे गातुं यज्ञाय गातुं यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः। ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे ॥ खिलम् (३६. १५. पृ. ७९१.) ओम्– नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै, नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे महते करोमि॥

(त्रिः); **संज्ञानमुशनावदत्। ओम् तत् सत्। हरिः ओम्।** उपाकृताः वै वेदाः इति - एतत् सर्वं आचार्यः स्वयमुक्त्वा शिष्यांश्च वाचयेत्।

पात्रस्थजलेन आचार्यः आत्मानं शिष्यांश्च प्रोक्षेत् ॥

## पञ्चमो भागः

## ९. अथ होमशेषः

### ९. १. अनुयाजसमिद्धोमः

वसुभ्यः स्वाहा - वसुभ्यः इदं न मम । **इध्मरज्जुहोमः** । रुद्राय स्वाहा - रुद्राय तन्तिचरायेदं न मम । अपः उपस्पृश्य । **संस्रावहोमः** । विश्वेभ्यः देवेभ्यः स्वाहा - विश्वेभ्यः देवेभ्यः संस्रावभागेभ्यः इदं न मम ।

### ९. २. सप्त प्रायश्चित्तहोमाः

**अयाश्च** विमदः । अयाऽग्निः पदपङ्क्तिः । प्रायश्चित्ताज्यहोमे विनियोगः—

१. **अयाश्चाग्ने** असि अनभिशस्तीश्च सत्यमित् त्वं अयाः असि । अयासा वयसा कृतः, अया सन् हव्यमूहिषे । अया नो धेहि भेषजं स्वाहा - अग्नये अयासे इदं न मम ।

२. **अतो देवाः** मेधातिथिः देवाः गायत्री । प्रायश्चित्तार्थाज्यहोमे विनियोगः—**अतो देवा** अवन्तु नो यतो विष्णुर्वि चक्रमे । पृथिव्याः सप्तधामभिः ॥ देवेभ्यः स्वाहा - देवेभ्यः इदं न मम ।

३. **इदं विष्णुः** मेधातिथिः विष्णुः गायत्री । प्रायश्चित्तार्थाज्यहोमे विनियोगः -इदं विष्णुर्वि चक्रमे त्रेधा निदधे पदम् समूळ्हमस्य पांसुरे ॥ विष्णवे स्वाहा - विष्णवे इदं न मम ॥ व्याहृतीनां व्यस्तानां समस्तानां च विश्वामित्र-गौतम-अत्रि-भरद्वाजाः । अग्नि-वायु सूर्य प्रजापतयः । गायत्री-उष्णिक्-अनुष्टुप्-बृहत्यः । प्रायश्चित्तार्थाज्यहोमे विनियोगः—

४. ओम् भूः स्वाहा-अग्नये इदम् । ५. ओम् भुवः स्वाहा-वायवे इदम् । ६. ओम् स्वः स्वाहा - सूर्याय इदम् । ७. ओम् भूर्भुवः स्वः स्वाहा- प्रजापतये इदम् ॥

**ब्रह्मणा कर्तव्याः सप्ताहुतयः । अयाश्चेत्यादीः** सप्ताहुतीः ब्रह्मणा, ब्रह्मणा अन्वारब्धः आचार्यो वा ऋषिदेवताच्छन्दोवर्जं जुहुयात् ।

## ९. ३ स्वरादिविपर्यासप्रायश्चित्तहोमः

अस्मिन् उपाकरणकर्मणि मध्येसम्भावित मन्त्र तन्त्र-क्रियाकाललोप-स्वरवर्ण-विधिविपर्यासद्रव्यविपर्यास- न्यूनातिरेक-प्रायश्चित्तार्थम् - **यद्वो देवा** इति एकां आहुतिं होष्यामि । **यद्वो देवाः** अभितपाः मरुतः त्रिष्टुप् । **यद्वो देवा** अतिपातयानि वाचा च प्रयुती देवहेलनम् । अरायो अस्माँ अभिदुच्छुनायते अन्यत्रा-स्मन्मरुतः तन्निधेतत ।। स्वाहा - मरुद्भ्यः इदम् । कर्मसाद्-गुण्याथ ओम् - केशवाय स्वाहा - इत्यादयः द्वादश होमाः ।

## ९. ४. पूर्णाहुतिः

**धामन्ते** वामदेवः आपो जगती । पूर्णाहुतिहोमे विनियोगः-**धामन्ते** विश्वं भुवनमधि श्रितमन्तः समुद्रे हृद्यन्तरायुषि । अपा-मनीके समिथे य आभृतः तमश्याम मधुमन्तं त ऊर्मिम् ॥ स्वाहा-अद्भ्य इदम् न मम । आज्यं सर्वं हुत्वा पात्रं उत्तरतो निधाय, अग्निं परिसमुह्य, पर्युक्ष्य—

## ९. ५. पूर्णपात्रनिनयनं प्रोक्षणं च

वरुणाय नमः इति अक्षतान् पात्रे विकीर्य, वरुणपात्रं पुरतः बर्हिषि निधाय, पात्रं स्पृशन् - पूर्णमसि पूर्णं मे भूयाः ।

सुपूर्णमसि सुपूर्णं मे भूयाः । सदसि सन्मे भूयाः । सर्वमसि सर्वं मे भूयाः । अक्षितमसि मा मे क्षेष्ठाः (इति जपित्वा).

प्राच्यां दिशि देवाः ऋत्विजो मार्जयन्ताम् । दक्षिणस्यां दिशि मासाः पितरो मार्जयन्ताम् । प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् । उदीच्यां दिशि आपः ओषधयो वनस्पतयो मार्जयन्ताम् । ऊर्ध्वायां दिशि यज्ञः संवत्सरः प्रजापतिः मार्जयताम्– इति पञ्चसु दिक्षु जलं कुशैः निनीय–

१, **माऽहं प्रजां** परासिचम् या नः सयावरीः स्थन । समुद्रे वो निनयानि स्वं पाथो अपीथ ॥

२. **आपो अस्मान्** मातरः शुन्धयन्तु घृतेन नो घृतप्वः पुनन्तु । विश्वं हि रिप्रं प्रवहन्ति देवीः उदिदाभ्यः शुचिरा पूत एमि ॥ ३. **इदमापः प्र वहत** यत्किं च दुरितं मयि । यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ ४. **सुमित्र्या न आपः** ओषधः सन्तु दुर्मित्र्याः तस्मै सन्तु । योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ॥ इति पात्रस्थं जलं भूमौ निःस्राव्य, आत्मानम् शिष्यांश्च प्रोक्षेत् ॥

## ९. ६. ब्रह्मोद्वासनम्

ब्रह्मन् वरं ते ददामि । ब्रह्मणे नमः । सकलाराधनैः स्वर्चितम् । दक्षिणां ताम्बूलं च दत्वा, परिस्तरणं प्रागादि आदायोत्तरतो विसृज्य ॥

## ९. ७. अग्न्युपस्थानम्

**ओश्च मे** सारस्वतः अग्निः त्रिष्टुप् । अग्न्युपस्थाने विनियोगः–**ओश्च मे** स्वरश्च मे यज्ञोप च ते नमश्च । यत्ते न्यूनं तस्मै ते उप । यत्ते अतिरिक्तं तस्मै ते नमः । **मन्त्रहीनं** क्रियाहीनं भक्तिहीनं हुताशन । यद्धुतं तु मया देव परिपूर्णं तदस्तु ते ॥ **प्रायश्चित्तान्य**शेषाणि तपःकर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ प्रणम्याभिवाद्याचामेत् । स्वस्तिवाचनम् । अथ शिष्याः आचार्यं नमस्कृत्याभिवाद्य आशीर्वादं प्राप्य आचार्यसम्भावनां कृत्वा, गृहं प्राप्य मातरं पितरमन्यांश्च मान्यान् प्रणम्य, भगवत्पूजां विधाय बन्धुभिः सह भगवन्निवेदितभोज्यादिकमुपयुञ्जीरन् ॥

**अध्यायोपाकर्मक्रमः समाप्तः**

# 17. அத்யாய உபாகர்ம

**ப்ரயோக விளக்கம்**

**1. ஸங்கல்பம். அத்யாயோபாகர்மகரிஷ்யே** என்று ஸங்கல்பம். பிறகு புண்யாஹ வாசனம் செய்து ஹோமத்ரவ்யங்களை ப்ரோக்ஷிக்க வேண்டும். உபநயனம் செய்த பையனுக்கு முதல் உபாகர்மாவானால் அவனுடைய பிதா அப்யுதயம் செய்ய வேண்டும்.

குறிப்பு: ஸங்கல்ப வாக்யத்திலுள்ள **ஏதேஷாம் க்ருஹஸ்தானும் ப்ரஹ்மசாரிணும்** என்ற பதங்களையும் **மம ச** என்பதில் **ச** என்பதையும் விட்டு, பிறவற்றைச் சொல்லி சிஷ்யர்களும் ஸங்கல்பம் செய்து கொள்ளவேண்டும். உபாகர்மாவை முற்பகலில் செய்ய வேண்டும் என **தர்மஸிந்துவும் (ஏதத் பஹ்வ்ருசை: பூர்வாஹ்ணே கார்யம்.** பக்கம் 53), **நிர்ணயஸிந்துவும் (பவேது பாக்ருதி: பௌர்ணமாஸ்யாம் பூர்வாஹ்ண ஏவது.** பக்கம். 91) கூறும். **ப்ர. பா.** நடுப்பகலுக்குப்பின் செய்ய வேண்டும் **(ஏதச்ச மத்யாஹ்னதூர்த்வமே** கார்யம்–பக்கம். 247**)** என்று கூறுகிறது.

**2. அக்னிப்ரதிஷ்டை முதலியன.** அக்னிப்ரதிஷ்டை, அக்னி ஸந்தானத்தில் செய்தது போன்றதே.

3. **அன்வாதானத்தில் ஸாவித்ர்யாதி நவப்ரதான தேவதா: ஆஜ்யத்ரவ்யேண, அக்ன்யாதி... ததிஸக்துத்ரவ்யேண, யஜ்ஞோபவீதேந பரமாத்மானம்** என்ற மாறுதல் உண்டு.

**4. அக்னிஸம்ஸ்காரம்,** பாத்ரஸாதனம், ப்ரோக்ஷணம், ப்ரஹ்மவரணம், ப்ரணீதாப்ரணயனம், தயிர் கலந்த பொரி மாவை எடுத்து வைத்தல், ஆஜ்யஸம்ஸ்காரம், ஸ்ருக்ஸ்ருவஸம்மார்ஜனம் அக்னி அலங்கரணம், இத்ம ஹோமம், ஆகார ஹோமம், ஆஜ்ய பாக ஹோமம் இவை எல்லாம், அக்னி ஸந்தானத்தில் உள்ளவை போன்றே செய்யப்படுவன.

**5. ஸாவித்ர்யாதி** ஹோமம், உத்ஸர்ஜனத்தில் செய்யப் பட்டது போல் செய்யப்பட வேண்டும்.

**6. மண்டல தேவதா ஹோமமும்** உத்ஸர்ஜனத்தில் செய்யப் பட்டது போலவே செய்யப்பட வேண்டும். **உத்ஸர்ன** என்பதற்குப் பதிலாக **உபாகர்ம**...என்று சொல்ல வேண்டும். இருபது ஹோமங்கள் முடிந்தவுடன் ஒரு யஜ்ஞோபவீதத்தை தர்வியில் வைத்து அபிகாரணம் செய்து யஜ்ஞோபவீத ஹோமமும், ஸக்துமாவினால் ஸ்விஷ்டக்ருத் ஹோமமும் செய்ய வேண்டும்.

**குறிப்பு:**— யஜ்ஞோபவீத ஹோமத்தைச் செய்யும்படி ஆச்வலாயனரும் உரையாசிரியர்களும் காரிகைகாரரும் சொல்லவில்லை. சில ஸ்ம்ருதிகள் சொல்லியிருப்பதால் ரிக்வேதிகள் இதனைச் செய்கின்றனர். பக்கம் **323** கீழ்க் குறிப்பில் உதாஹரிக்கப்பட்டுள்ள ச்லோகங்களைக் காண்க. இந்த ஹோமத்தை யஜுர் வேதிகளும் ஸாம வேதிகளும் செய்வதில்லை. மஹர்ஷி விதிக்காத இதனைச் செய்ய வேண்டிய அவச்யமில்லை. எனவே இது, ஸ்ருக்ஸ்ருவ ஸம்மார்ஜனம் போல் **க்ருதா க்ருதம்** ஆகும். அதாவது, செய்தாலும் செய்யலாம். செய்யாமலும் விட்டு விடலாம் என்றபடி.

இந்த யஜ்ஞோபவீத ஹோமத்தைச் செய்வது ஸ்விஷ்டக்ருத் ஹோமத்திற்கு முன்பா பிறகா என்பதில் அபிப்ராயபேதமுள்ளது. உரைகாரர் நாராயணர் **நாத்ர ஸௌவிஷ்டக்ருத்** (2-3-4) என்ற ஸூத்ர உரையில் **ஆகந்துக**மான-புதிதாக வந்த-அங்கங்களைச் செய்த பின் ஸ்விஷ்டக்ருத் செய்ய வேண்டுமென்று சொன்னதை அனுசரித்து, ஆகந்துகமான யஜ்ஞோபவீத ஹோமத்தை ஸ்விஷ்டக்ருத் செய்வதற்கு முன்பு சிலர் செய்கின்றனர். **யாநி ஆகந்தூன் யங்கானி விஹிதானி தத்ர தானி க்ருத்வா பச்சாத் ஸ்விஷ்க்ருத் கார்ய:** (பக்கம். 94) என்பது அவர் உரை.

ஸூத்ரகாரரும், **சைத்யயஜ்ஞே, ப்ராக் ஸ்விஷ்டக்ருத:, சைத்யாய பலிம் ஹரேத்** (1-12. 1 பக்கம் 46) என்ற ஸூத்ரத்தில் சைத்ய யஜ்ஞத்தில் ஸ்விஷ்டக்ருத்திற்கு முன் சைத்ய பலி தர வேண்டும் என்று கூறியிருப்பதும் இந்த அனுஷ்டானத்தை ஆதரிக்கும். **கார்ஷ்ணாஜனி** என்ற ஸ்ம்ருதிகாரர் ஸ்விஷ்டக்ருத் ஹோமம் செய்து, ததிஸக்து ப்ராசனம் செய்த பிறகு யஜ்ஞோபவீத ஹோமம் செய்யச் சொல்லியிருப்பதை அனுசரித்துச் சிலர், இதை ஸ்விஷ்டக்ருத்திற்குப் பிறகு செய்கின்றனர். பக்கம் 323-இல் கீழ்க் குறிப்பில் தரப்பட்டுள்ள ச்லோகங்களைப் பார்க்க. **ப்ர. பா.** ஸ்விஷ்டக்ருத்திற்குப் பிறகு செய்வதையே விரும்புகிறது. அதன் வாக்யம்:— **அத்ர ஸக்துப்ராசனானந்தரம் யஜ்ஞோபவீத ஹோமம் க்ருத்வா விப்ரேப்யோபி தத்த்வா ஸ்வயம் ச தாரயேத்**(பக்கம். 250). இது விஷயமாக மூன்று வகை முடிவுகள் செய்யலாம் 1. ஸ்விஷ்டக்ருத்திற்கு முன் செய்வது. 2. ஸ்விஷ்டக்ருத்திற்குப் பின் ஸக்து ப்ராசனம் செய்த பின் செய்வது. 3. **க்ருதாக்ருதம்** என்ற க்ரமத்தில் செய்யாமல் விட்டு விடுவது. க்ருஹஸ்தர்கள் தம் தமது ஸம்ப்ரதாயத்தை அனுசரிப்பது.

**ப்ரயோக விளக்கம்:**

### 7 ஸக்துப்ராசனம்

**7-1.** ஹோமம் செய்த பின் மிஞ்சியுள்ள தயிர் கலந்த பொரி மாவை **ஸக்துமிவ** என்ற ரிக்கைச் சொல்லி ஆசார்யர்களும் சிஷ்யர்

களும், ஹோமம் செய்த இடத்தினின்றும் சிறிது விலகிச் சென்று, சாப்பிட்டுக் கைகளை அலம்பி ஆசமனம் செய்ய வேண்டும். சிலர் **ததிக்ராவ்ண:** என்பதைச் சொல்லி சாப்பிடுவர். மஹர்ஷி இதற்கான மந்த்ரம் தராததால் மந்த்ரமின்றியும் சாப்பிடுதல் அனுஷ்டானத்தில் உள்ளது. பிறகு பரிஸ்தரண தர்ப்பத்தினால் உள்ளங்கைகளை மறைத்து வேறு ஒருவர் நீர் விட, கை சுத்தமடையும். இதற்கு **மார்ஜனம்**–சுத்தம் செய்து கொள்ளுதல்-என்று பொருள். இது போன்ற **மார்ஜனத்தை** யாகத்தில் செய்யும்படி விதித்தபோது **பரிஸ்தரணை: அஞ்ஜலிமந்தர்தாய அப: ஆஸேசயதே. தன் மார்ஜனம்** (ஆச்வ. ச்ரௌ. ஸூ. 1-8-2 பக்கம் 29) என்று மார்ஜனத்தை விளக்கி இருக்கிறார் மஹர்ஷி. யாகத்தில் ஹவிஸ்ஸின் சேஷத்தைச் சாப்பிடும் போது ப்ரோக்ஷணம் இல்லை. கையில் நீர் விடுதல் மாத்ரமே உள்ளது. அங்கு உரையாசிரியர், "இந்த மார்ஜனத்திற்குப் பலனாக நாம் நேரில் காண்பது கையின் சுத்தம்" என்று கூறியிருக்கிறார். தயிர்ப் பொரிமாவைச் சாப்பிட்ட பின் அதே போல் கையையலம்புவதுதான் சரியானதென்று புலப்படுகிறது.

ஆனால் அனுஷ்டானம் வேறு விதமாக உள்ளது. 1. பரிஸ்தரண தர்ப்பத்தை சிஷ்யர்களின் கையில் வைத்துத் தீர்த்தம் சேர்த்து, அந்த தீர்த்தத்தை எடுத்து சிஷ்யர்களை ப்ரோக்ஷிப்பது என்பது ஒருவகை அனுஷ்டானம். **மார்ஜனம்** என்பதற்கு **ப்ரோக்ஷணம்** என்ற அர்த்தமும் உண்டாகையால் இந்த அனுஷ்டானம் ஏற்பட்டது. இது ப்ரணீதா ஜலப்ரோக்ஷணத்தைப் பார்த்து ஏற்படுத்திக் கொண்டது எனலாம். 2. பரிஸ்தரணத்தை சிஷ்யர்களின் கையில் வைக்காமல் அக்னி அருகில் அது இருக்கும் இடத்திலேயே அதன்மேல் தீர்த்தத்தைச் சேர்த்து அந்த ஜலத்தை எடுத்து ப்ரோக்ஷிப்பது மற்றொருவகை அனுஷ்டானம். ஸூத்ரகாரர் ப்ரோக்ஷணத்தைக் கருத்தில் கொள்ளவில்லை என்பது உதாஹரித்துள்ள ச்ரௌத ஸூத்ரத்தைப் பார்த்தால் விளங்கும். வ்யாக்யானகாரர்கள் கூட **ப்ரோக்ஷணம்** என்ற பதத்தை இந்த இடத்தில் உபயோகிக்கவில்லை. கீழே தந்துள்ள காரிகைகளைக் கவனிக்க.

**ததி ஸக்தூன் ஸ்வயம் சிஷ்யா: ப்ராச்ய ஆசம்ய. தத: பரம் பரிஸ்தரணதர்பை: தை: அந்தர்தததி தே ஞ் ஜ லீ ன். அன்யேன. ஸேசயந்த்யாப: தாபி: குர்வந்தி மார்ஜனம்.** (காரிகை. பக்கம் 291)

இதன் பொருள்:- "ததிஸக்துவை ஆசார்யரும் சிஷ்யர்களும் சாப்பிட்டு ஆசமனம் செய்தபின் (உள்ளங்கை இரண்டையும்

சேர்த்து) பரிஸ்தரண தர்பங்களால் மறைத்துக் கொள்ள, மற்றொருவர் அதன்மேல் ஜலத்தை விடுவர். அந்த ஜலத்தினால் கைகளை அலம்பிக் கொள்வர்'' க்ருஹஸ்தர்கள் தமது ஸம்ப்ரதாயத்தை அனுசரிப்பது.

**7. 2–3 யஜ்ஞோபவீத தாரணம்** முதலியன. **யஜ்ஞோபவீதம்** என்ற மந்த்ரத்தைச் சொல்லி யஜ்ஞோபவீதம் தரிக்க வேண்டும். **ரிக்ஸாமாப்யாம்** என்பதால் மான்தோலையும், **ப்ராவேபா:** என்பதால் மௌஞ்ஜியையும், **ஏஷக்ஷேதி** என்பதால் தண்டத்தையும், ப்ரஹ்மசாரிகள் தரிக்க வேண்டும்.

## 8. அத்யாயோபாகர்மாங்க வேதாரம்பம்

**8-1-5 அத்ய பூர்வோக்த** என்று தேசகாலங்களைக் கூறி, **ச்ராவண்யாம் ச்ரவணநக்ஷத்ரே அத்யேஷ்யமாணானாம் சந்தஸாம் ஸவீர்யத்வாய ... கரிஷ்யே** என்று ஆசார்யரும், சிஷ்யர்களும் ஸங்கல்பம் செய்வர். பிறகு, ஆசார்யர் வேதாரம்ப வாக்யங்களைக் கூற, சிஷ்யர்களும் தொடர்ந்து அவற்றைக் கூறி **உபாக்ருதா: வை வேதா:** என்றவரை சொல்ல வேண்டும்.

**குறிப்பு:** — ஸக்துப்ராசனம் தொடங்கி வேதாரம்பம் முடியும் வரையுள்ளவை ஆசார்யருக்கும் சிஷ்யர்களுக்கும் பொதுவானவை. **உ**பாக்ருதா: என்பதற்குப் பதிலாக, ஸ்வீக்ருதா: என்றும் சிலர் சொல்வர்.

**முக்ய விஷயம்:** ஆச்வலாயனர் **ஓம்பூர்வா:** என்ற ஸூத்ரத்தில் (*3, 5, 12*, பக்கம் *131*) **வேதாதிம் ஆரபேத்** என்று, விதித்தார். **வேதாதிம்** என்பதை **வேதஸ்ய ஆதிம்** என்று உரையிட்ட நாராயணரும் ஹரதத்தரும் **அக்னிமீளே** என்று தொடங்கும் ஸூக்தத்தையோ அனுவாகத்தையோ வேதாரம்பத்திற்கு **அங்கமாக** சொல்ல வேண்டுமென்று தான் உரையிட்டிருக்கிறார்கள். இதுதான் ஆச்வலாயனருக்கும் ஸம்மதமானது. எனவே, ரிக்வேதி ஒருவர் ஸ்வசாகையின் முதல் ஸூக்தமான **அக்னிமீளே** என்பதைத் தொடங்கி ஒன்பது ரிக்குகளை மாத்திரம் சொல்லி, அதற்கு மேல் வேறு எதையும் சொல்லாமல்தான் வேதாரம்பத்தைச் செய்து முடிக்க வேண்டும். ஆபஸ்தம்பரும், முதலிலிருந்து மூன்று அனுவாகங்களை உபாகர்மாவில் சொல்லும்படி விதித்திருக்கிறார்.

அவருடைய ஸூத்ரம்:— ''**த்ரீன் அனுவாகான் ஆதித: அதீயீரன்**'' (பக்கம். *182*). ஆபஸ்தம்பிகளில் பெரும்பாலோர் யஜுர் வேதத்தின் தொடக்கத்திலுள்ள நான்கு அனுவாகங்களைத் தவிர வேறு எதையும் சொல்வதில்லை.

ரிக் வேதிகளுக்கு,ப்ரயோகம் எழுதியவர்கள்,இதர வேதங்கள், வேதாங்கங்கள், வித்யாஸ்தானங்கள் இவற்றின் முதல் வாக்யங்களையும். அவற்றைத் தொடங்குவதற்கு அங்கமாகக் கொடுத்திருக்கிறார்கள். இப் பழக்கத்தை அனுஸரித்தே இந்த ப்ரயோகத்திலும் யஜுர் வேதத் தொடக்கம் முதலியன தரப்பட்டுள்ளன. உண்மையில் அவைகள் சொல்லப்படவேண்டுவன அல்ல. இதர வேதங்களைத் தொடங்கக் கூடாதென்பதற்கு மற்றும் ஒரு முக்யமான காரணமும் உண்டு. ஒருவன் தன் வேதத்தை முற்றிலுமாக அத்யயனம் செய்த பிறகுதான் மற்றொரு வேதத்தின் அத்யயனத்தைத் தொடங்க வேண்டும் என்று நியமம் உள்ளது. ரிக்வேதி ஒருவர் தமது வேதாத்யயனத்தை முடிக்காமலேயே இஷே த்வா என்று சொல்லி யஜுர் வேதத்தை தொடங்குவது சாஸ்த்ர ஸம்மதமன்று. கீழே தந்துள்ளவற்றைக் கவனிக்க.

**''சதுரோனுவாகான் இத்யேவ நியமாத் அனுவாகாந்தர-வேதாந்தர – ஸூத்ராந்தராதிவ்யவச்சேத:,** ப்ராரப்த ஸ்வவேத **ஸமாப்த்யனந்தரமேவ வேதாந்தராத்யயனவிதானாத்.** ய: **ஸ்வசாகாம் பரித்யஜ்ய பாரக்யமதிகச்சதி. சாகாரண்ட:** ஸ **விஜ்ஞேய: ஸர்வதர்ம பஹிஷ்க்ருத:** என்பவை வைதிக ஸார்வபௌமரின் வ்யாக்யான வாக்யங்கள். **க்ருஹ்ய ரத்ன கண்ட பூஷணம்** (பக்கம் 131). பண்டிதர்கள் இதை விமர்சிக்க வேணும்.

## 9. ஹோம சேஷம் முதலியன

அனுயாஜஸமித் ஹோமம், இத்மரஜ்ஜுஹோமம, ஸம்ஸ்ராவ ஹோமம், ஏழு ப்ராயச்சித்த ஹோமங்கள், விபர்யாஸ பரிஹரண ஹோமம், பூர்ணாஹுதி, ப்ரணீதாநிநயனம் ப்ரோக்ஷணம், ப்ரஹ்மோத்வாஸனம், அக்னி உபஸ்தானம் என்ற இவைகள், ஹோமத்தின் மிஞ்சியுள்ள பகுதிகளாகச் செய்யப்படவேண்டும். இவற்றின் முறைகள் **அக்னிஸந்தானத்தில்** (பக்கங்கள் 135–148, 154) தரப்பட்டுள்ளன. பிறகு சிஷ்யர்கள் ஆசார்யருக்கு ஸம்பாவனை செய்து ஆசீர்வாதம் பெற வேண்டும்.

உபாகர்மாவில் செய்யப்படும் முக்யமான கர்மாக்கள்:—

1. ஸங்கல்பம், 2. அக்னி பிரதிஷ்டை, 3, அன்வாதானம் 4. அக்னி ஸம்ஸ்காரம் முதலியன, 5. ஸாவித்ரி ஹோமம் 6. மண்டல தேவதா ஹோமம் 7. ஸக்துப்ராசனம் முதலியன, 8. வேதாரம்பம், 9. ஹோம சேஷம்.

ஆசார்யர் கிடைக்காத பொழுது ஸங்கல்பம் செய்து, யஜ்ஞோபவீதம் தரித்து, வேதாரம்பம் செய்து முடிக்கலாம்.

**அத்யாயோபாகர்ம க்ரமம் முற்றும்**

## १८. गायत्रीजपक्रमः

**श्रावणानन्तरं** परेद्युः महानद्यां स्नात्वा सन्ध्यामुपास्य, ब्रह्मचारी चेत् समिदाधानमपि कृत्वा, आचम्य प्रणानायम्य.... अस्यां प्रथमायां शुभतिथौ .... प्रीत्यर्थं मिथ्याधीतप्रायश्चित्तार्थं अष्टोत्तरसहस्रसङ्ख्यया गायत्रीमहामन्त्रजपं करिष्ये इति सङ्कल्प्य - सन्ध्योपासने इव प्रणवादीनां ऋष्यादिन्यासपूर्वकं प्राणायामत्रयं कृत्वा मिथ्याधीत प्रायश्चित्तार्थं गायत्रीमहामन्त्रजपं करिष्ये इति उक्त्वा प्रातर्ध्यायामीति मन्त्रं विहाय - **यो देवः** इति ध्यानं कृत्वा जपं कुर्यात् । जपावसाने प्राणानायम्य **उत्तमे शिखरे देवि** (पु.६५) इत्यनेन गायत्रीं उद्वासयेत् । **केचित्** प्रातस्सन्ध्योपस्थानमन्त्रेण, माध्याह्निकसन्ध्योपस्थानमन्त्रेण वा उपस्थानं कृत्वा आचमनं कुर्वन्ति ।

**होमपक्षे तु** :- मिथ्याधीतदोषप्रायश्चित्तार्थं सावित्र्या **समित्सहस्रमाधास्ये** - इति संकल्पः । श्रोत्रियागारादग्निमानीय प्रतिष्ठाप्य, परिसमुह्य, परिस्तीर्य परिषिच्य प्रणवव्याहृतिपूर्वया सावित्र्या आज्याभ्यक्तं समित्सहस्रं एकैकशः अग्नौ आधाय [प्रत्याधानं मन्त्रावृत्तिः] **मयिमेधामि**त्यादिभिः [पु.७२] अग्निमुपस्थाय प्रणम्याभिवाद्याचामेत् ।। गृहस्थश्चेत् **ओञ्च मे** इत्यनेनोपस्थायाभिवादनम् कुर्यात् ।।

**गायत्रीजपक्रमः समाप्तः**

# 18 காயத்ரீ ஜப க்ரமம்

**ப்ரயோக விளக்கம்:**

*ச்ராவணத்திற்கு மறுநாள் காலையில் நதியில் ஸ்நாநம் செய்து ஸந்த்யாவந்தனம் முதலியன செய்தபின்...* **மித்யாதீதப்ராயச்சித் தார்த்தம் கரிஷ்யே** *என்று ஸங்கல்பம் செய்து ஸந்த்யா வந்தனத் தில் செய்வது போல் ப்ராணாயாம மந்த்ரங்களுக்கு ரிஷி தேவதை சந்தஸ் முதலியன சொல்லி ப்ராணாயாமம் செய்து,* **மித்யாதீத... கரிஷ்யே** *என்றி கூறி, காயத்ரி த்யானம் முதலியன சொல்லி ஜபம் செய்ய வேண்டும். ஜபத்தின் முடிவில்* **உத்தமே சிகரே** *என்பதைச் சொல்லி காயத்ரி* **உத்வாஸனம்** *செய்து* **ஆசமனம்** *செய்ய வேண்டும். சிலர் ஜபத்தின் முடிவில் காலை ஸந்த்யாஉபஸ்தான மந்த்ரங்களாலோ மாத்யாஹ்னிக உபஸ்தான மந்த்ரங்களாலோ உபஸ்தானம் செய்வர்.*

*முதல் ச்ராவணமாயின் ஸமித்தால் ஹோமம் செய்வர்.* **மித்யாதீத தோஷப்ராயச்சித்தார்த்தம் ஸமித்ஸஹஸ்ரம் ஆதாஸ்யே** *என்று ஸங்கல்பம் செய்து ஸமித்துக்களை நெய்யினால் நனைத்து காயத்ரியைச் சொல்லி ஒவ்வொன்றாக ஸமித்தை அக்னியில் வைக்க வேண்டும். ஒவ்வொன்றை வைப்பதற்கு முன் காயத்ரி சொல்லப்பட வேண்டும்.* (**'ஸ்வாஹா, நமம'** *என்பதைச் சொல்ல வேண்டாம்) முடிவில்,* **ஹோமம் செய்யும்** *ப்ரஹ்மசாரி,* **மயிமே** **தம்** *முதலியவைகளைச் சொல்லியும் (பக்கம் 72), க்ருஹஸ்தர்,* **ஓம் மே** *என்பதைச் சொல்லியும்* **உபஸ்தானம்** *செய்து அக்னியை நமஸ்கரித்து* **அபிவாதனம்** *செய்து* **ஆசமனம்** *செய்ய வேண்டும்.*

**குறிப்பு:**—வேதாத்யயனம் செய்யும் போது சில நியமங்களை அனுசரிக்க வேண்டும். நியமங்களை அனுசரிக்காமல் செய்யப் படும் அத்யயனத்தை **மித்யாதீதம்** என்பர். வருஷம் முழுவதும் இந்த **மித்யாதீதம்** நிகழலாமாதலால் இதனால் வரும் பாபத்தைப் போக்கிக் கொள்ள அதற்கான ப்ராயச்சித்தத்தை ஆபஸ்தம்பர் விதித்திருக்கிறார்: **ச்ராவண்யாம் பௌர்ணமாஸ்யாம் திலபக்ஷ: உபோஷ்ய வா ச்வோபூதே மாஹாநதம் உதகம் உபஸ்ப்ருச்ய ஸாவித்ர்யா ஸமித்ஸஹஸ்ரமாதத்யாத்; ஜபேத் வா.** (ஸூத்ரம், 7-1. பக்கம். 194 ஆபஸ்தம்பதர்மஸூத்ரம்) "ச்ராவணபௌர் ணமியில் உபவாஸம் இருந்தோ எள்ளை மாத்ரம் ஆஹாரமாகக் கொண்டோ இருந்து, மறுநாள் ஸமுத்ர ஸங்கமம் அடையும் துங்கினி காவேரி முதலான மஹா நதியில் ஸ்நாநம் செய்து ஸாவித்ரியைச் சொல்லி ஆயிரம் ஸமித்துக்களை அக்னியில் வைக்க வேண்டும். காயத்ரி ஜபமும் செய்யலாம்." என்பது இதன்

பொருள். மஹர்ஷி ஆயிரம் என்ற பதத்தை உபயோகித்திருந் தாலும் இதரஸ்ம்ருதிகளில் கூறியதை அனுசரித்து ஆயிரத்தெட்டு தடவை செய்யப்படுகிறது. "**அஷ்டோத்தர ஸஹஸ்ரம் யோ காயத்ரீம் லோகவந்திதாம்; ஜபேத்**-**சேஷ**தர்மம். *16. 16*.

இந்த ஜபத்தை ஆச்வலாயனர் விதிக்கவில்லை ஆனல் நன்மையை உத்தேசித்து ரிக்வேதிகளும் ஸாமவேதிகளும் கூட இந்த ஜபத்தைச் செய்கின்றனர்.

**காயத்ரீ ஜப க்ரமம் முற்றும்**

## அனுபந்தம் 1

இந்த கிரந்தத்தில் மேற்கோளாகக் காட்டப்பட்ட நூல்களும் அவற்றின் பதிப்பு பற்றிய விபரமும்.

| | |
|---|---|
| ஆபஸ்தம்ப ச்ரௌத ஸூத்ரம் | கும்பகோணம் பதிப்பு |
| ஆபஸ்தம்ப க்ருஹ்ய ஸூத்ரம் | சௌகாம்பா பதிப்பு |
| ஆபஸ்தம்ப தர்ம ஸூத்ரம் | ,, |
| ஆச்வலாயன க்ருஹ்ய ஸூத்ரம் காரிகை-<br>-பரிசிஷ்டம், இவற்றுடன் | பம்பாய் பதிப்பு |
| ஆச்வலாயன க்ருஹ்ய ஸூத்ரம்-<br>-ஹரதத்தர் உரையுடன் | திருவனந்தபுரம் பதிப்பு |
| ஆச்வலாயன க்ருஹ்ய மந்த்ர வ்யாக்யா (ஹரதத்தர்) | ,, |
| ஆச்வலாயன ச்ரௌத ஸூத்ரம் | ஆனந்தாச்ரமம் புனு ,, |
| போதாயன க்ருஹ்ய ஸூத்ரம் | மைஸூர் பதிப்பு |
| மனுஸ்ம்ருதி, யாஜ்ஞவல்க்யஸ்ம்ருதி | பம்பாய் ,, |
| இதர ஸ்ம்ருதிகள் | கல்கத்தா ,, |
| சௌனகீயம் | திருவனந்தபுரம் ,, |
| ப்ரயோக பாரிஜாதம் | பம்பாய் ,, |
| நிர்ணய ஸிந்து மூலம் | ,, |
| தர்ம ஸிந்து | ,, |
| வைத்யநாத தீக்ஷிதீயம்-ச்ராத்த காண்டம் | புனு பதிப்பு |
| ,, -ஆசார காண்டம் | கும்பகோணம் ,, |

| | | |
|---|---|---|
| १. श्रीमान् वे | | तनियन् |
| ,, गुरुभ्य: | न्याति श्लो १ | |
| ,, श्रीमन्नभीष्ट | न्याद श्लो ४ | |
| ,, स्वशेष | | क्रियादीपे |
| ,, शुक्लाम्बर | | — |
| २. यस्य द्विरद | वृहा श्लो १ | |
| ४. समस्त जगदाधार | | — |
| ९. ओम् | ऐ. ब्रा. २४. १ | |
| ,, भूर्भुव:स्व: | ऐ.आ.१.३.२.१० | |
| ,, ओम्भू:.... | नाउ. ११७ | |
| ,, तत्सवितु: | ,, ,, | |
| ,, ओमापो- | ,, ,, | |
| ,, तत्सवितु: | ऋ.३.६२.१० | |
| १०. आपो हि | ऋ.१०.९.१-३ | |
| ११. सूर्यश्च | नाउ ११५ | |
| १२. दधिक्रा | ऋ ४.३९.६ | |
| १४. यदद्य | ,, ८.९३.४ | |
| ,, असावादित्यो ब्रह्म | | — |
| ,, आदित्यं | बोस्मृ.पु १८२३ | |
| ,, केशवं | ,, ,, | |
| १६. पृथ्वि त्वया | मदेप्र | |
| १८. मुक्ताविद्रु | शाति २१.१६ | |
| ,, अर्कमण्डल | | — |

| | | |
|---|---|---|
| २०. आयातु वरदा | नाउ. ११६ | |
| २१. प्रातर्ध्यायामि | | — |
| २२. यो देव: | | अस्मृ. |
| २२. आदित्य | | — |
| २५. उत्तमे शिख | नाउ. १२० | |
| ,, मित्रस्य | ऋ. ३.५९.६ | |
| ,, मित्रो जना | ,, ३.५९.१ | |
| २६. प्रसमित्र | ,, ३.५९.२ | |
| ,, जातवेद | ,, १.९९.१ | |
| ,, पिशंग | ,, १.१३३.५ | |
| २७. भद्रं कर्णे | ,, १.८९.८ | |
| ,, केश्यग्नि | ,, १०.१३६.१ | |
| २८. ध्येय: सदा | बृपस्मृश्लो ५ | |
| ,, शङ्खचक्र | शेध १५-२ | |
| २९. यमाय | लौ पु. ३०३ | |
| ,, औदुम्ब | ,, ,, | |
| ,, ऋतं सत्यं | नाउ. १०२ | |
| ,, नर्मदायै | ऋखि २.७ | |
| ,, अपसर्प | | — |
| ,, जरत्कारो: | | — |
| ,, नम: सवित्रे | | — |
| ३०. आकाशात् | | — |
| ,, कायेन वाचा | | — |

३५. आपः पुनन्तु नाउ ११३
३७. उद्घेदभि ऋ ८.९३.१
४१. मध्यन्दिने —
४४. उदुत्यम् —
इत्यादि ऋ.१.५०.१-१३
४६. चित्रं देवानां —
इत्यादि ऋ.१.११५.१-६
४८. सविता प ऋ.१०.३६.१४
५५. अग्निश्च मा नाउ. ११४
५८. न तस्य मायऋ.८.२३.१५
६२. सायं सरस्वतीम् —
६५. इमं मे वरुणऋ.१.२५.१९
,, तत्त्वायामि ,, १.२४.११
६६. यच्चिद्धिते ,, १.२५.१
,, यत्किञ्चेदं ,, ७.८९.५
,, कितवासः ,, ५.८५.८
,, अग्नये स आश्व गृ १.२१.१
,, तेजसा मा ,, १.२१.२
,, मयि मेधां
इत्यादि ,, १.२१.४

७२. मानस्तोके ऋ १.११४.८
७३. स्वस्ति श्रद्धां लौ पु २६९
७५. यज्ञोपवीतम् पागृ. २.२
,, उपवीतं जीर्णं —
७७. नमोमहद्भ्यः ऋ.१.२७.१३
७८. ऋध्यास्म तैब्रा.३.१.२.१
७९. तदेव लग्नं —
७९. गणानां त्वा ऋ.२.२३.१
८०. पूगीफल —
,, वक्रतुण्ड —
८४. श्रद्धयाग्निः ऋ.१०.१५१.१
८४. ओमापः सन्तु बोगृशे १.१०.५
८६. ओम् शान्तिरस्तु बोगृशे १.१०.१५
१०८. सप्तहस्तः लौ.पु.२६८
,, स्वाहां तु ,,
,, तोमरं ,,
,, मेषारूढम् —

**குறிப்பு:—தனியன்—**வேதாந்த தேசிகர் விஷயமாக அவர் குமாரர் வரதாசார்யர் இயற்றிய த்யான ச்லோகம்.

ப்ராணாயாம மந்த்ரம் முற்றிலும் நாராயண உபநிஷத்தில் (117) உள்ளது. **ஸுவ:** என்று அங்குள்ளதை **ஸ்வ:** என்று ரிக்வேதிகள் சொல்ல வேண்டும். **அபஸர்ப ஜரத்காரோ:** என்று சிறிது பாட பேதத்துடன் ரிக்வேத கிலத்திலும் (அத்யா 2. 5·6). மஹா பாரதம் **ஆதிபர்வத்திலும் உள்ளது.** (அத்யா 58 ச்லோ 24-25) **ஸ்வஸ்தி ச்ரத்தாம்** என்பதற்குப் பதிலாக **ச்ரத்தாம் மேதாம் என்று** பாடம் **ஸ்ம்ருதியில் உள்ளது.** ரிக்வேதத்தைக் குறிக்கும்போது முதல் எண் மண்டலத்தையும், இரண்டாவது எண் ஸூக்தத்தையும், மூன்றாவது ரிக்கின் எண்ணையும் குறிக்கும்.

## अनुबन्धः ३ शोधनिका

| पुटः | पङ्क्तिः | शुद्धम् | पुटः | पङ्क्तिः | शुद्धम् |
|---|---|---|---|---|---|
| १ | १९ | विघ्नोप | ८३ | ११ | सर्वोपकरण |
| ३ | १६ | ஸ்காரந | ८६ | २ | समाधीयताम् |
| ३ | २५ | छायायां | ९२ | १२ | देवीरभिष्टये |
| १७ | १३ | सपवित्रचतुर्हस्ताः | १०६ | १२ | सन्धानं |
| १८ | ६ | युगळं | १११ | २० | गृहीतेन |
| २५ | ७ | गायत्री | ११९ | २७ | पात्रमुद्धृत्य |
| ३७ | ७ | छन्दः | १२३ | १४ | संस्कृत्य |
| ४१ | १४ | मध्यंदिने | १२७ | ७ | द्विरभिधार्य |
| ४१ | १६ | वृषवाहनाम् | १३२ | १ | स त्वं |
| ४७ | ६ | विततं | १३५ | १७ | निहितां |
| ५० | १० | कुण्डलवान् | १४६ | ४ | பூர்ணமாக |
| ,, | ११ | वपुर्धृत | १४७ | ११ | निनयानि |
| ,, | १७ | स्वशेषभूतेन | १४९ | २८ | ஜாதகாரர் |
| ७१ | ६ | परिसमुह्य | १५० | २३ | अग्ने |
| ७७ | २० | ७ | १५१ | १२ | होमद्रव्यम् |
| ७९ | १ | ८ | १५२ | ११ | हस्ताञ्जलिं |
| ८० | १४ | उपमश्रवस्तमम् | १७६ | २० | तामिहोप |
| ,, | १६ | यथास्थानं | ,, | २३ | देवीरभिष्टये |
| ,, | १८ | देवं | १८९ | १७ | निवेदयेत् |
| ,, | २० | समारभेत | १९० | २३ | मातृः |
| ,, | २१ | समाप्तः | २१५ | १६ | ஸ்வாதோரபக்ஷி |

| पुटः | पङ्क्तिः | शुद्धम् |
| --- | --- | --- |
| २३० | ३ | द्राघीयांसं |
| २३४ | ९ | प्रोक्ष्य |
| २३६ | ३२ | भुक्तवत्सु |
| २४५ | २२ | पितरः |
| २५६ | १७ | ऋद्ध्या |
| २६१ | ७ | पवित्रग्रन्थिंविस्रस्य என்ற பதங்களை விட்டு, उपस्पृश्य என்பதற்கு பிறகு पवित्रम् என்பதைச் சேர்த்துக் கொள்ளவும் |

| पुटः | पङ्क्तिः | शुद्धम् |
| --- | --- | --- |
| २७० | १९ | विकीर्याद्वास्य |
| २८८ | १६ | द्युभिः |
| २८९ | १५ | उत्सर्जनं |
| २९१ | १८ | ,, |
| ३१४ | १० | स्रुवेण |
| ३१५ | २१ | विनियोगः |
| ३१९ | ६ | दीधिति |
| ३२३ | २४ | दत्त्वा |

–×–

आश्वलायनगृह्याणां प्रयोगस्य परिष्कृतिम् ।
श्रीनाथो वेंकटाद्रीशः कृपया पर्यपूरयत् ॥